वामनजयादित्यविरचिता

# काशिका

न्यास-पदमञ्जरी-भावबोधिनी-सहिता

प्रथमो भागः

[१.१—१.२]

सम्पादकौ
डा. जयशङ्कर लाल त्रिपाठी
डा. सुधाकर मालवीयः

तारा प्रिण्टिंग वर्क्स

वामनजयादित्यविरचिता

# काशिका

## न्यास-पदमञ्जरी-भावबोधिनी-सहिता

प्रथमो भागः

[१.१—१.२]


सम्पादकौ

डा. जयशङ्कर लाल त्रिपाठी

डा. सुधाकर मालवीयः



तारा प्रिंटिंग वर्क्स

*Prācyabhāratīgranthamālā --17*

# KĀŚIKĀ

(A COMMENTARY ON PĀṆINI'S GRAMMAR)

of

VĀMANA & JAYĀDITYA

with

NYĀSA or VIVARAṆAPAÑJIKĀ

of

JINENDRABUDDHI

and

PADAMAÑJARĪ

of

HARADATTA MIŚRA

with

BHĀVABODHINĪ

Hindi Exposition by Dr. JAYA SHANKAR LAL TRIPATHI

*Critically Edited by* :

**Dr. Jaya Shankar Lal Tripathi**

Vyākaraṇācārya (Goldmedalist), M. A., Ph, D , D. Litt.,

and

**Dr. Sudhakar Malaviya**

Sahityācārya, M. A., Ph. D.,

Department of Sanskrit, Banaras Hindu University

*Foreword by*

**Prof. Biswanath Bhattacharya**

*Mayūrabhañja Professor & Head, Department of Sanskrit, Banaras Hindu University*

Volume I

[Adhyāyas 1.1—1.2]

TARA PRINTING WORKS

VARANASI

1986

प्राच्यभारतीग्रन्थमाला—१७

श्रीमद्वामन-जयादित्यविरचिता

पाणिनीयाष्टाध्यायीसूत्रवृत्तिः

# का शि का

श्रीजिनेन्द्रबुद्धिविरचितया 'न्यासा'परपर्यायकाशिकाविवरणपञ्जिकाख्यया

विद्वद्वरश्रीहरदत्तमिश्रविरचित-'पदमञ्जरी'-समाख्यया च व्याख्यया सहिता

डॉ० जयशङ्करलालत्रिपाठिविरचितया 'भावबोधिनी' हिन्दीव्याख्यया च विभूषिता

संपादकौ

डॉ० जयशङ्कर लाल त्रिपाठी

व्याकरणाचार्यः ( लब्धस्वर्णपदकः ), एम० ए०, पी-एच्० डी०, डी० लिट्०

डॉ० सुधाकर मालवीयः

साहित्याचार्यः, एम० ए०, पी-एच्० डी०

संस्कृत-विभागः, काशी हिन्दू विश्वविद्यालयः

प्रस्तावकः

डॉ० विश्वनाथ भट्टाचार्यः

मयूरभञ्ज प्रोफेसर, विभागाध्यक्षः, संस्कृत-विभागः, कला-संकायः

काशी हिन्दू विश्वविद्यालयः

## प्रथमो भागः

( १.१—१.२ अध्यायात्मकः )

तारा प्रिंटिंग वर्क्स

वाराणसी

१९८६ तमः खिष्टाब्दः ]  [ २०४३ तमो वैक्रमाब्दः

## PUBLISHERS' NOTE

We have the pleasure in presenting the first Volume of Kāśikā with Nyāsa and Padamañjarī along with the new Hindi exposition Bhāvabodhinī by Dr. Jaya Shankar Lal Tripathi.

The learned editors of the present edition—Dr. Jaya Shankar LaL Tripathi, Reader and Dr. Sudhakar Malaviya in the Sanskrit Department, Banaras Hindu University have taken great pains and care in editing the text and the Hindi exposition. They have provided, in addition to Hindi exposition, critical notes and references which, we are sure, will render this edition more useful and valuable than all the earlier editions.

The whole work shall be completed in ten Volumes as follows :

| *Volume* | *Adhyāya/Pāda* | *to* | *Adhyāya/Pāda* |
|---|---|---|---|
| I | 1 | — | 1/2 |
| II | 1/3 | — | 2/2 |
| III | 2/3 | — | 3/2 |
| IV | 3/3 | — | 4/1 |
| V | 4/2 | — | 5/1 |
| VI | 5/2 | — | 6/1 |
| VII | 6/2 | — | 6 |
| VIII | 7 | | |
| IX | 8 | | |
| X | Indices | | |

We hope that the present edition shall be appreciated and warmly welcomed by students and scholars alike.

मुखं व्याकरणं तस्य ज्योतिषं नेत्रमुच्यते ।
निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे ।।
शिक्षा घ्राणं तु वेदस्य हस्तौ कल्पान् प्रचक्षते ।

—पाणिनि शिक्षा

—:o:—

'ब्राह्मणेन हि निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'—इति श्रुतिः ।

—:o:—

षट्स्वङ्गेषु प्रधानं व्याकरणम्, प्रधाने च कृतो यत्नः फलवान् भवति ।

—पतञ्जलिः

## FOREWORD

Introducing the *FIRST* Volume of the *Kāśikāvṛtti* provides me with a great pleasure and a sense of academic achievement. Dr. Jaya Shankar Lal Tripathi a senior colleague and Reader and Dr. Sudhakar Malaviya, the Senior Research Assistant in the Department of Sanskrit have undertaken the publication of the renowned *Vṛtti* on Paninian *Aṣṭādhyāyī* by Vāmana and Jayāditya along with the two well known commentaries *Nyāsa* (Kāśikāvivaraṇapañjikā) by Jinendrabuddhi and *Padamañjarī* by Haradatta Miśra. I congratulate them for undertaking such an ambitious project which, when completed, will meet a long-felt need of providing a thoroughly dependable edition of the basic texts of *Aṣṭādhyāyī* and *Kāsikā* along with two most important commentaries.

In addition to the meticulous care taken by the editors in printing the text as flawlessly as possible, they have provided useful critical notes and references whenever necessary and extensive indices to render the edition almost indispensible for the students following the Sūtra-Vṛtti-Bhāṣya mode of grammatical study in particular and researchers in general. Dr. Tripathi has also added a Hindi rendering of the *Vṛtti* which happens to be a pioneering effort. Translation of *Śāstras*, especially of one like the Vyākaraṇa where extreme precision is truly the soul of style, is a difficult and different job. I am happy to note that Dr. Tripathi with his firm grounding in the *Śāstra* has given an exposition which, apart from being faithful to the text, has done full justice to the purport as well.

Publication of the Kāśikā as planned is a stupendous work and the learned editors happen to be ideally qualified to fulfill the same. While congratulating both of them, I only hope and pray that they succeed in bringing out all the ten volumes as early as possible. I am sure that the entire Sanskritic world will welcome the grand scholarly venture.

**BISWANATH BHATTACHARYA**

*Professor & Head, Department af Sanskrit*

*Banaras Hindu University*

*November 25, 1985*

येनाऽक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ।।

# सम्पादकीयम्

इन्द्रावरुणा यदृषिभ्यो मनीषां वाचो मतिं श्रुतमदत्तमग्रे ।
यानि स्थानान्यसृजन्त धीरा यज्ञं तन्वानास्तपसाभ्यपश्यम् ॥

—ऋ० ८.५९.६ ।*

विश्वस्य प्राचीनतमास्वखिलासु भाषासु संस्कृतं सर्वा अपि अतिशेते इत्यत्र न कस्यापि वैमत्यम् । आश्चर्यविषयोऽयं यत्सत्स्वपि बहुविधेषु राजनैतिकपरिवर्तनेषु धार्मिकान्दोलनेषु चापि यदि काचिद् भाषास्ति तादृशी याऽस्मिन् विशालेऽपि भारते आसेतु हिमाचलं मूलभाषापदवीमारूढा भाषणादिव्यवहारपदवीमधिष्ठिता सञ्जागर्तितराम, तर्हि सा केवलमियं सुरभारती एव इति विमर्शका आकलयन्ति ।[1] वस्तुतोऽस्य वैशिष्ट्यस्य हेतुषु अस्या व्याकरणं प्रामुख्यं भजते, येनाद्यापीयं भाषाऽक्षुण्णरूपेण विराजमाना सर्वान् सम्मोहयति ।

**व्याकरणस्य महत्त्वम्**

संस्कृतस्य विशालं वाङ्मयं, तत्र च वेदानां महत्त्वं सर्वसम्मतम् । वेदानां सम्यग्ज्ञानाय तेषां षडङ्गानां ज्ञानं प्राचीनकालादेव प्रचलितं विद्यते । तानि च षडङ्गानि—शिक्षा, कल्पम्, व्याकरणम्, निरुक्तम्, ज्योतिषम्, छन्दश्चेति । तत्र—

१. **शिक्षाग्रन्थाः**—वस्तुतो ध्वनिविज्ञानस्यैव मूलरूपाः सन्ति । शिक्षाऽप्यध्ययनकाले कर्मणि च मन्त्राणामुच्चारणप्रकारं प्रतिपादयति ।

२. **व्याकरणम्**— वैदिकं व्याकरणं प्रातिशाख्यं च प्रकृति-प्रत्ययविभाजनज्ञानद्वारा वाक्तत्त्वस्य विश्लेषणं प्रतिपादयतः । तत्र व्याकरणमर्थविशेषमाश्रित्य पदमन्वाचक्षाणं पदपदार्थप्रतिपादनेन वेदस्योपकरोति ।

३. **निरुक्तम्**—निर्वचनप्रधानत्वात् संज्ञाशब्दानां निरुक्तिं व्याचष्टे । एवं निरुक्तं तु व्याकरणस्यैव कात्स्न्र्यम् ।

४. **छन्दोविचितिः**—'गायत्र्या यजति' 'त्रिष्टुभा शंसति' इत्यादौ श्रुतानां गायत्र्यादिशब्दानां लक्षणतोऽर्थमाचष्टे ।

५. **ज्योतिषम्** —अध्ययनोपयोगिनमनुष्ठानोपयोगिनं च कालविशेषं प्रतिपादयति ।

---

*तेभ्यः ऋषिभ्यः मन्त्रदृग्भ्यः मनीषादिश्रुतान्तं सर्वं युवाम् अदत्तं दत्तवन्तौ इत्यहं तपसा आलोचनात्मकेन ज्ञानेन अभ्यपश्यं सर्वतो दृष्टवानस्मि । **मनीषा** = अत्र चिज्जडविवेकवती बुद्धिः । **वाचः** = उपनिषल्लक्षणा गिरः । **मतिः** = मननं तर्कसामर्थ्यम् । **श्रुतं** = शास्त्रमीमांसालक्षणम् । एतत्सर्वं भवद्भ्यां तेभ्यो दत्तमिति श्रीमच्चरणप्रसादाल्लब्धज्ञानेन मया ज्ञातमित्यृषेर्वक्तुरभिप्रायः इति तत्र सायण ।

१. 'Even at the present moment, after a Century of English rule and English teaching, I believe that Sanskrit is more widely understood in India than Latin was in Europe at the time of Dante." इति विद्वद्धुरीणो भट्टमोक्षमूलरः; 'India : What can it Teach us.'

**६. कल्पसूत्राणि**—प्रतिशाखं शाखान्तराधीतेन न्यायप्राप्तेन चाङ्गेनोपेतस्य कर्मणः प्रयोगं कल्पयन्ति । एवं च षट्स्वङ्गेषु व्याकरणं पदपदार्थज्ञानस्य तदायत्तत्वात् प्रधानमिति[1] सुधियो वदन्ति ।

**व्याकरणस्य प्राचीनत्वम्**

ब्राह्मणग्रन्थेषु इन्द्र-वरुण-वृत्रादिशब्दानां निर्वचनं तदर्थप्रतिपादनं च प्राप्यते । ऐतरेय-ब्राह्मणे वाक्तत्त्वं सप्तधा विभज्यते[2] । गोपथब्राह्मणे ओंकार-शब्दे धातु-प्रत्यय उपसर्ग-निपात-विभक्त्यादिव्याकरण-शास्त्रीयशब्दानां प्रयोगः सर्वप्रथममुपलभ्यते[3] । इन्द्र एव प्रकृतिप्रत्ययविश्लेषणस्य प्रथमः प्रवर्तकः । तथा च तैत्तिरीयैराम्नातम्—

**'वाग्वै पराच्य व्याकृतावदत् । ते देवा इन्द्रमब्रुवन्, इमां नो वाचं व्याकुर्विति ।……तामिन्द्रो मध्यतोऽव-क्रम्य व्याकरोत् ।'[4]**

**"एवं हि श्रूयते—बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम ।"[5]**

पुराष्टप्रभेदं व्याकरणं प्रचलितमासीत् । यथा—

**ब्राह्ममैशानमैन्द्रं च प्राजापत्यं बृहस्पतिम् ।**
**त्वाष्ट्रमापिशलं चेति पाणिनीयमथाष्टमम् ॥[6]**

किन्तु वाल्मीकीयरामायणे[7] तथा श्रीतत्त्वविधिग्रन्थे नवप्रभेदं व्याकरणं दृश्यते—

**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ।**
**सारस्वतं चापिशलं शाकल्यं पाणिनीयकम् ॥**

एतेषु व्याकरणसम्प्रदायेषु ऐन्द्रं व्याकरणं प्रमुखमासीत् । तिब्बतीयग्रन्थानुसारम्—'ऐन्द्रं' व्याकरणं पञ्च-विंशति-सहस्रश्लोकपरिमितमासीत् । एतद् व्याकरणं पाणिनीयव्याकरणतः पञ्चविंशतिगुणमधिकमिति विज्ञायते—

**यान्युज्जहार माहेन्द्राद् व्यासो व्याकरणार्णवात् ।**
**पदरत्नानि किं तानि सन्ति पाणिनिगोष्पदे ॥[8]**

---

१. ( i ) छन्दः पादौ तु वेदस्य मुखं व्याकरणं स्मृतम् ।
( ii ) छन्दः पादौ शब्दशास्त्रं च वक्त्रं कल्पं पाणी ज्योतिषं चक्षुषी च ।
शिक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं वेदस्याङ्गान्याहुरेतानि षड् हि ॥ १ ॥
मीमांसाद्या न्यायविद्या पुराणं स्मृतिस्तथोपाङ्गचतुष्टयं मतम् ।
अङ्गोपाङ्गोपस्कृतः शुद्धबुद्धिः पश्येद् वेदमितरो नैव पश्येत् ॥ २ ॥
— ऋक्सर्वा० : षड्गुरुशिष्यकृता भूमिका, श्लो० १४ ।

२. 'सप्तधा वै वागवदत्'—ऐ० ब्रा० ७.७ ।

३. 'ओङ्कारं पृच्छामः, को धातुः, किं प्रातिपदिकम्, किं नामाख्यातम्, किं लिङ्गम्, किं वचनम्, का विभक्तिः, कः प्रत्ययः, कः स्वर, उपसर्गो निपातः, किं वै व्याकरणम्……किं स्थाननादानुप्रदानानुकरणम्'—गो० ब्रा० ५०.१–२४ ।

४. तै० सं० ६.४.७ ।

५. महाभाष्यम्, पस्पशाह्निकम् ।

६. निरुक्तम्, दुर्गाचार्यः, पृ० ७४ ।

७. सोऽयं नवव्याकरणार्थवेत्ता……( वा० रा०, उ० का० ३६–४७ ) ।

८. महाभारतम्, देवबोधकृता ज्ञानदीपिका टीका ।

**समुद्रवद् व्याकरणं महेश्वरे तदर्धकुम्भोद्धरणं बृहस्पतौ।**
**तद्भागभागाच्च गतं पुरन्दरे कुशाग्रबिन्दूत्पतितं हि पाणिनौ ॥**[1]

**महर्षिः पाणिनिः** ( खि० पू० ५०० वर्षकालिकः )

तत्र सत्सु बहुषु व्याकरणेषु शिवप्रसादादधिगतवैशिष्ट्यं पाणिनीयं व्याकरणं लौकिक-वैदिकोभयशब्दानां साधुत्वस्य नियामकम्।[2] महर्षिः पाणिनिः स्वकीययाऽद्भुतप्रतिभया सकल-शब्दशास्त्र-समुद्रं समुन्मथ्याष्टस्वध्यायेषु नवनीतमिवापेक्षितं सर्वं व्याकरणं सूत्ररूपेण प्रोक्तवान्। तत्राष्टाध्याय्यां सप्तनवत्यधिकनवशतोत्तर त्रिसहस्राणि ( ३९९७ ) सूत्राणि वर्तन्ते। तस्यां व्याकरणशास्त्रसम्बद्धाः सर्वेऽपि विषयाः सूत्रशैल्यां प्रतिपादिताः।

अष्टाध्यायीसूत्राणां प्रमुखविषयाः सामान्यज्ञानायात्र प्रस्तूयन्ते—

| विषयाः | सूत्राङ्काः |
|---|---|
| **प्रथमाध्याये** | |
| **प्रथमे पादे** | |
| प्रत्याहारप्रकरणम् | मा० सू० १–१४ |
| वृद्ध्यादिसंज्ञाप्रकरणम् | १.१.१ |
| प्रगृह्यसंज्ञाप्रकरणम् | १.१.११ |
| घ्वादिसंज्ञाप्रकरणम् | १.१.२० |
| सर्वनामसंज्ञाप्रकरणम् | १.१.२७ |
| अव्ययसंज्ञाप्रकरणम् | १.१.३७ |
| सर्वनामस्थानसंज्ञा | १.१.४२ |
| विभाषासंज्ञा | १.१.४४ |
| सम्प्रसारणम् | १.१.४५ |
| टित्कित्मितः | १.१.४६ |
| आदेशनियमाः | १.१.४८ |
| स्थानिवद्भावप्रकरणम् | १.१.५६ |
| लोपसंज्ञादिप्रकरणम् | १.१.६० |
| टि-उपधासंज्ञे | १.१.६४ |
| ग्रहणकशास्त्रप्रकरणम् | १.१.६८ |
| वृद्धसंज्ञाप्रकरणम् | १.१.७३ |
| **द्वितीये पादे** | |
| ङित्प्रकरणम् | १.२.१ |
| कित्प्रकरणम् | १.२.५ |
| ह्रस्वदीर्घप्लुतसंज्ञाः | १.२.२७ |
| उदात्तादिसंज्ञाः | १.२.२९ |
| एकश्रुतिविधयः | १.२.३३ |
| प्रातिपदिकप्रकरणम् | १.२.४५ |
| संख्यातिदेशप्रकरणम् | १.२.५१ |
| एकशेषप्रकरणम् | १.२.६४ |
| **तृतीये पादे** | |
| धातु-संज्ञा | १.३.१ |
| इत्संज्ञाप्रकरणम् | १.३.२ |
| आत्मनेपदप्रकरणम् | १.३.१२ |
| उभयपदप्रकरणम् | १.३.७२ |
| परस्मैपदप्रकरणम् | १.३.७८ |
| **चतुर्थे पादे** | |
| नदीसंज्ञाप्रकरणम् | १.४.३ |
| घिसंज्ञादिप्रकरणम् | १.४.७ |

१. सारस्वतभाष्यम्।

२. यथा ( पाणिनिः )—'उभयथर्क्षु' ( ८.३.८ ), 'यजुष्युरः' ( ६.१.११७ ), 'देवसुम्नयोर्यजुषि काठके' ( ७.४.३८ ), 'यज्ञकर्मण्यजपन्यूङ्खसामसु' ( १.२.३४ ), 'द्वितीया ब्राह्मणे' ( २.३.६० ) प्रभृतिसूत्रेषु केषाञ्चिद्विधीनां लक्ष्याण्यपि विविच्य निर्दिशति।

अत्र वेदविषये कश्चिद् विशेषः। पाणिनिः क्वचित् 'वा षपूर्वस्य निगमे' (६.४.९) इत्यादौ **निगम**-शब्दम्, 'मन्त्रे घसंवरणश·········' (२.४.८०) इत्यादौ **मन्त्र**-शब्दं च व्यापकार्थे गृह्णाति। किन्तु प्रायशश्छन्दश्शब्दमेव व्यवहरति। छन्दश्शब्देन च छन्दोनिबद्धो मन्त्र एव विवक्षित इति नियमो न कृतः आचार्येण। वस्तुतस्तु 'छन्दसि पुनर्वस्वोरेकवचनं (अन्यतरस्यां)' (१.२.६१) इति सूत्रेण विहितं ह्येकवचनं 'पुनर्वसुर्नक्षत्रमदितिर्देवता' इति छन्दोहीने यजुषि दृश्यते। अतः '**छन्दसि**' इति पदं वैदिकभाषासामान्य-वाचकम्, 'काठके'—प्रभृतीनि इतराणि पदानि तु विशेषवाचकानीति ज्ञेयम्। निगमशब्दोऽप्यर्थस्वारस्यात् सामान्यवाचक एव। किन्तु स शब्दः केषुचिदेव सूत्रेषूपात्तः। '**आर्ष**'-शब्दोऽप्येकत्र सूत्रे छन्दःपर्यायो दृष्टः; यथा—'सम्बुद्धौ शाकल्यस्येतावनार्षे' (१.१.१६)। एवमेव पाणिनिः साम्प्रतमनुपलब्धब्राह्मणविषयेऽपि निर्दशति।[1]

**वार्त्तिककारः कात्यायनः** ( ख्रि० पू० ३०० **वर्षकालिकः** )

पाणिनि-परवर्तिषु वैयाकरणेषु वार्त्तिककारः कात्यायनः विशेषतोऽत्र उल्लेखनीयः। पाणिनीयसूत्रे उक्तानुक्तदुरुक्तार्थान् विवेचयता समीक्षणत्वेन वार्त्तिकानि कात्यायनेन विरचितानि। तान्यपि सूत्राणीव प्रमाणानीति सर्वे स्वीकुर्वन्ति। किन्तु वार्त्तिकानां स्वरूपादिकमद्यापि न व्यवस्थितमिति खेदावहम्।

---

१. 'अनुब्राह्मणादिनिः' ( पा० सू० ४.२.६२ )

**महाभाष्यकारः पतञ्जलिः ( ख्रि० पू० १५० वर्षकालिकः )**

किन्तु सूत्राणि वार्त्तिकानि चैतदुभयमपि संक्षिप्तरूपेण व्याकरणसिद्धान्तान् प्रत्यपादयत्, येनाभिप्राय-बोधने काठिन्यमन्वभूयत । अतो महर्षिणा पतञ्जलिना अनुपमे स्वकीये महाभाष्ये सरलया भावगम्भीरया च शैल्या विशदरूपेण विषयाणां प्रतिपादनमकारि । एवं **पाणिनि-कात्यायन-पतञ्जलयो 'त्रिमुनि'** इत्याख्यया वैयाकरणैः स्तूयन्ते ।

**व्याख्यानस्य द्वैविध्यम्**

कालान्तरे पुनः शास्त्रसौकर्याय बालावबोधनाय च प्रयोगप्रक्रियाक्रमं संलक्ष्य नैकेषां प्रक्रियाग्रन्थानां रचना सञ्जाता । अस्मिन्, शब्दशास्त्रे ये ग्रन्थाः पाणिनिविरचितसूत्रक्रमेण वर्त्तन्ते, ते**ऽष्टाध्यायीक्रमा**वलम्बिनः, ये च प्रयोगानुसारेण विद्यन्ते, ते **प्रक्रियाक्रमा**वलम्बिनः कथ्यन्ते । तत्र वामनजयादित्येन कृता **'काशिकावृत्तिः'** अष्टाध्यायीक्रमस्य उपलब्धवृत्तिषु प्रथमा वृत्तिः । प्रक्रियाकौमुदीकारः रामचन्द्राचार्यः ( ख्रि० १४०० ), वैयाकरणसिद्धान्तकौमुदीकारः शब्दकौस्तुभ—प्रौढमनोरमादिग्रन्थकृद् भट्टोजिदीक्षितः ( ख्रि० १६०० ), मध्यसिद्धान्तलघुसिद्धान्तकौमुदीकारो वरदराजाचार्यः शब्देन्दुशेखरादीनां प्रणेता नागेशभट्टश्च विशेषतोऽत्र प्रक्रियाक्रम उल्लेखनीयाः ।

परवर्त्तिषु वैयाकरणेषु वाक्यपदीयकारो **भर्तृहरिः**, **'काशिका'**–वृत्तिकारौ वामन-जयादित्यौ, **न्यास**-कारो जिनेन्द्रबुद्धिः, **पदमञ्जरी**कारो हरदत्तमिश्रः, महाभाष्यस्य **प्रदीप**–टीकाकारः कैयटः, महाभाष्यस्य शब्द-कौस्तुभव्याख्याकारः सिद्धान्तकौमुद्यादिप्रणेता श्रीमद्भट्टोजिदीक्षितः, महाभाष्यस्य **उद्द्योत**टीकाकारः, परिभाषेन्दुशेखर–मञ्जूषा–शब्देन्दुशेखर-स्फोटवादादीनां च प्रणेता नागेशभट्टः—इमे परां प्रतिष्ठामलभन्त ।

सर्वेष्वेतेषु ग्रन्थेषु पतञ्जलेर्महाभाष्यं भर्तृहरेर्वाक्यपदीयञ्च व्याकरणरत्नस्वरूपे स्तः । वाक्यपदीये श्लोकरूपेण व्याकरणदर्शनस्य, पद-पदार्थ-वाक्य-वाक्यार्थ-स्फोटसिद्धान्ता यथा प्रतिपादिताः, न तथान्यत्र ।

**काशिका**

अष्टाध्यायीक्रममवलम्ब्य संपादितेषु सर्वेष्वेतेषु ग्रन्थेषु पाणिनेः संक्षिप्ता शैली, अपरत्र च महाभाष्य-कारस्य अतिविस्तृता बहुपरिश्रमसाध्या च शैली । अत्र मध्यममार्गेण व्याकरणशास्त्रस्य सर्वेषां विषयाणां परिज्ञानाय कैश्चिद् वृत्तिकारैः प्रयासो व्यधायि । तत्र वामन–जयादित्याभ्यां (ख्रि० ७००) महाभाष्यसमाश्रिता सरलरीत्या सोदाहरण-सूत्र-व्याख्यान-प्रतिपादनपरापेक्षितभावप्रकाशिका **'काशिका'** नाम्नी वृत्तिर्विरचिता ।

सा चेदानीमियं वृत्तिः पाणिनीयाष्टाध्याय्या उपलब्धवृत्तिषु प्राचीनतमा । अस्यां प्रतिसूत्रम् अनुवृत्त्युदा-हरण–प्रत्युदाहरणानि शङ्कासमाधान-पुरःसराणि समुपलभ्यन्ते । काशिकाकाराभ्यां पाणिनिशास्त्रोपरि परम्पराप्राप्तस्य विषयजातस्य प्रयत्नेन रक्षणं कृतम्, यतो गणपाठोपसंख्यानेष्ट्यादीनां परिष्कृतरूपेण सह वृत्तिभाष्य-नामधातु-पारायणादिषु विप्रकीर्णस्य तन्त्रस्य [=व्याकरणशास्त्रस्य] सारसङ्ग्रहोऽत्र जिज्ञासुभिः सारल्येनोपलभ्यते । अत्र पाणिनिपरम्परावगाहित्वात् काशिकायां विपुलमैतिहासिकं विषयवस्तु सुरक्षितं विद्यते नात्र संशय-लेशोऽपि ।

उद्धृतिविषयेऽत्र कश्चिद् विशेषः—

काशिकागतानामुदाहरणानां मूलस्थानं महाभाष्ये उताहो काशिकातः पूर्ववर्तिषु व्याकरणग्रन्थेषु समाहितमस्ति; यथा—१. 'समवप्रविभ्यः स्थः' ( १.३.२ ) इति सूत्रे—'अस्ति सकारमातिष्ठते । आगमौ गुणवृद्धी आतिष्ठते ।' २. 'क्रीडोऽनुसंपरिभ्यश्च' (१.३.२१) इति सूत्रे 'आङिनुपृच्छयोरुपसंख्यान' मिति वार्त्तिके 'आनुते शृगालः । आपृच्छते गुरुम् । 'शप उपलम्भन इति उपसंख्यानम्' इत्यत्र च देवदत्ताय शपते । यज्ञदत्ताय

शपते।' ३. 'उपान्मन्त्रकरणे' ( १.३.२५ ) इति सूत्रे 'वा लिप्सायां' मिति वार्त्तिके 'भिक्षुको ब्राह्मणकुलमुपतिष्ठते, भिक्षुको ब्राह्मणकुलमुपतिष्ठति।' ४. 'अनुर्लक्षणे' ( १.४.८४ ) इति सूत्रे—'शाकल्यस्य संहितामनुप्रावर्षत्।' ५. 'आङ् मर्यादावचने' ( १.४.८९ ) इति सूत्रे 'आ कुमारं यशः पाणिनेः।' ६. 'व्यक्तवाचां समुच्चारणे' ( १.३.४८ ) इति सूत्रे '………वरतनु सम्प्रवदन्ति कुक्कुटाः'—इत्यादि। एवमियं काशिकावृत्तिः उदाहरणविषये बाहुल्येन महाभाष्यमेवाश्रयति। अतो यत्र यत्र एवं महाभाष्येण सह तुल्यता दृश्यते, तत्र तत्र सर्वत्र प्रस्तुतसंस्करणे '( म० भा० )' इति सङ्केतः कृतः।

छान्दससूत्रेषु कानिचित् तादृशानि अपि उदाहरणानि प्रदर्शितानि यानि प्रचलित-वैदिकग्रन्थेषु सर्वजनबोध्यानि नैव सन्ति। कुत्रचित् अनुपलब्ध-वैदिकग्रन्थानामपि उद्धरणानि प्रदर्शयन् स्वीयं वैदिकं विपुलं ज्ञानं प्राचीकटत् काशिकाकारः।

**काशिकायाः वैशिष्ट्यम्—**

१. अस्याः पूर्ववृत्तिग्रन्थेषु अनुपलब्धस्य गणपाठस्यात्रोल्लेखः।

२. विलुप्तवृत्तीनां तद्ग्रन्थकाराणाञ्च क्वचित् सङ्केतः।

३. भाष्येऽनुपलब्धस्य व्याख्यानस्य प्राचीनवृत्तीनामाश्रयेण प्रतिपादनम्। अत एव कुत्रचित् भाष्यकारेण सह विरोधोऽपि दृश्यते।

४. उदाहरणानि प्रत्युदाहरणानि च प्रायशः प्राचीनवृत्तीनामनुसारेणैव, येन ऐतिहासिकतथ्यानां परिज्ञानं भवति।

**व्याख्यानपद्धतिः—**

सर्वप्रथमं काशिकावृत्तेः सूत्राणां सूक्ष्मरूपेण परिशीलनेन शैलीविषये इदं वक्तुं शक्यते यदयं ग्रन्थकारः प्रथमं सूत्रस्य सामान्यमर्थं प्रस्तौति। तदनुसारेण सम्भावितानि सर्वाणि उदाहरणानि निरूपयति। एतदनन्तरं सूत्रे विद्यमानानां प्रत्येकं पदानां किं प्रयोजनम्? इति साधनार्थं प्रत्युदाहरण-प्रदर्शनेन प्रतिपादयति। सूत्रस्थानां विशेषपदानामग्रे कुत्रानुवृत्तिर्भवतीत्यपि स्पष्टरूपेण निरूपयति। साम्प्रतं व्याकरणग्रन्थेषु अनुवृत्तिविषये अयमेव सर्वप्रथमः प्रतिपादक इति न तिरोहितं विदुषाम्। सूत्रविशेषे ज्ञायमानायाः संज्ञायाः पारिभाषिकशब्दस्य वा कुत्रान्यत्र प्रयोगः? इत्यपि व्याख्यानप्रसङ्गे निरूपयति।[1]

भाष्यादौ उपलब्धानां वार्त्तिकानां ग्रहणं कुर्वताऽपि अनेन केवलं उपयोगिवार्तिकानामेव संग्रहो व्यधायि।

अस्तु, नव्यवैयाकरणैः शास्त्रार्थरसिकैः नैयायिकसरणिमनुसरद्भिः यो वाग्व्यापारो विहितः सोऽध्येतॄणां केवलं क्लेशाय एव, न त्वपेक्षितशब्दशास्त्रज्ञानाय। अतएव साम्प्रतमष्टाध्यायीक्रममाश्रित्यैव काशिकादिवृत्त्यनुसारेणैव व्याकरणाध्ययनमधिकलाभप्रदमिति प्रामाणिकाः समालोचकाः स्वीकुर्वन्ति।

एवं गम्भीरपर्यालोचनया इदं प्रतीयते यद्यदि धैर्येण मनोयोगेन च काशिकावृत्तेः किञ्चित्-कालपर्यन्तं स्वाध्यायोऽभ्यासश्च क्रियते, तदा पाणिनीयशब्दशास्त्रे नैपुण्यं निश्चितमित्यत्र न काचित् संशीतिः।

**काशिकायाः व्याख्याः—**

१. न्यासः।

२. पदमञ्जरी।

३. भावबोधिनी।

---

१. यथा 'घुप्रदेशाः'—पृ० १०८।

**(१) न्यासः ( काशिकाविवरणपञ्जिका )**

काशिकावृत्तेः टीका **काशिकाविवरणपञ्जिका**पर्याया **'न्यास'** इत्याख्यया प्रसिद्धा आचार्यजिनेन्द्रबुद्धिपादविरचिता ( ७०० ई० )। इयं सरलापि गम्भीराऽपेक्षितपदार्थबोधनसमर्थेति बोध्यम्।

**(२) पदमञ्जरी**

काशिकावृत्तेः अपरा प्रौढा टीका **'पदमञ्जरी'** श्रीविद्वद्वर-हरदत्तेन ( ११०० ई० ) प्रणीता। अत्र काशिकायाः प्रतिसूत्रं प्रति-पदं व्याख्यानं दृश्यते। अस्याः गाम्भीर्यं महत्त्वं च विदुषां सुस्पष्टम्।

हरदत्तस्य पिता पद्मकुमारः, माता 'श्री' नाम्नी, 'अग्निकुमारः' ज्येष्ठभ्राता, 'अपराजितः' तस्य गुरुश्चासीत्[1]। दक्षिणदेशवासी[2] हरदत्तः द्रविडः[3], शैवमतावलम्बी चासीत्[4]। 'कूचिमञ्चीत्यादयः'[5] इति प्रयोगानुसारेण सः आन्ध्रप्रदेशस्य निवासीत्यनुमीयते। 'कूचिमञ्चि' इत्याख्यः आन्ध्रप्रदेशस्य कश्चिद् ग्रामः।

**(३) भावबोधिनी**

अत्र न्यास-पदमञ्जरी-समाश्रिता सकलकाशिकावृत्तेः विशदा डॉ० जयशङ्करलालत्रिपाठिविरचिता **'भावबोधिनी'** नामधेयाऽभिनवाऽपूर्वा हिन्दी-व्याख्या विरजते। अस्यां सूत्राणां विस्तृतं व्याख्यानं प्रदर्श्य प्रक्रियाज्ञानसौकर्याय प्रकृति-प्रत्ययादिनिर्देशपुरस्सरं व्युत्पादनम्, अथ च 'विमर्श' इत्येतदन्तर्गतं गम्भीरविषय-विवेचनं जिज्ञासु-शङ्का-समाधानाय समायोजितम्।

अथेदानीं सप्रश्रयं सामोदं च विद्वज्जनसमक्षं प्रस्तूयते—आचार्यजिनेन्द्रबुद्धिपादविरचितया **न्यासा**-परपर्याय **'काशिकाविवरणपञ्जिकाख्यया'** श्रीविद्वद्वरहरदत्तमिश्रविरचितया **पदमञ्जरी**समाख्यया व्याख्यया च सहितायाः, अथ च डॉ० जयशङ्करलालत्रिपाठिविरचितया **भावबोधिनी**त्याख्ययाऽभिनवया हिन्दीव्याख्यया च विभूषितायाः—**'काशिका'** नाम वृत्तेः प्रथमाध्यायस्य द्वितीयपादपर्यन्तः **प्रथमो भागः**।

**संस्करणस्यास्य वैशिष्ट्यानि—**

१. सम्पूर्णकाशिकायाः हिन्द्यां विशदं व्याख्यानम्।

२. काशिकावृत्तावुपलब्धानामुद्धरणानामाकरग्रन्थेभ्यः संशोधनं विधाय मूलस्थाननिर्देशपुरस्सरं संयोजनम्।

३. वृत्तावुदाहरणत्वेनोद्धृतानां वैदिकपाठानां स्वराङ्कनसहिता प्रस्तुतिः।

४. न्यासस्य पदमञ्जर्याश्च विविधपाठानां समीक्षणपूर्वकं संपादनम्।

५. टीकाद्वये उपलब्धानामुद्धरणानां बाहुल्येन मूलनिर्देशः।

तत्र तावत् तत्तत्पाठसंशोधनार्थं यानि पुस्तकानि प्रयुक्तानि दृष्टानि वास्माभिः नामग्राहं तानि निर्दिश्यन्ते—

---

१. तातं पद्मकुमाराख्यं प्रणम्याम्बां श्रियं तथा।
ज्येष्ठं चाग्निकुमाराख्यमाचार्यमपराजितम्॥ ( पृ० १, श्लो० ३ )

२. यश्चिराय हरदत्तसंज्ञया विश्रुतो दशसु दिक्षु दक्षिणः। ( पृ० १, श्लो० ४ )

३. लेट् शब्दस्तु वृत्तिकारदेशे जुगुप्सितः, यथात्र द्रविडदेशे निविशब्दः। ( पा० सू० ६.१.१९२ )

४. तस्मै शिवाय परमाय दशान्याय साम्नाय सादामयं विहितं प्रणामः। ( पृ० १, श्लो० १ )

५. पदमञ्जरी, प्र० भाग, पृ० ७।

१. काशिकामूलपाठसमीक्षार्थम्—

(क) हस्तलिखितो ग्रन्थः सरस्वतीभवनपुस्तकालयस्थः। १, ३–४ अध्यायाः। क्रमसंख्या ३८०९९। लिपिकालः १८३८।

(ख) हस्तलिखितो ग्रन्थः सरस्वतीभवनपुस्तकालयस्थः (काशिकापदमञ्जरीसहिता) क्रमसंख्या ३८०५६।

(ग) पण्डितपत्रस्याधारेण काश्यां तारायन्त्रालये मुद्रितं द्वितीयं संस्करणम्, पं० बालशास्त्रिभिः संशोधितम्।

(घ) 'काशिका' चौखम्बासंस्कृतसीरीजमुद्रितः ग्रन्थः, पं० ब्रह्मदत्तजिज्ञासुमहोदयैः सम्पादितः, १९५२।

(ङ) काशीस्थतारायन्त्रालये मुद्रितः न्यास-पदमञ्जरीसहिता 'काशिका' ग्रन्थः, १९६५–६७।

(च) 'काशिका' ग्रन्थः संस्कृतपरिषद्, उस्मानियाविश्वविद्यालयतः मुद्रितः, डॉ० आर्येन्द्रशर्ममहोदयैः सम्पादितः।

(छ) काशीस्थरत्नापब्लिकेशन्स-कमच्छा-वाराणसीतः मुद्रितः ग्रन्थः (१९८५ ख्रि०) डॉ० श्रीनारायण-मिश्रमहोदयैः सम्पादितो ग्रन्थोऽप्यवसानावसरेऽवलोकितः।

२. 'न्यास' मूलपाठसमीक्षार्थम्—

(क) हस्तलिखितो ग्रन्थः, सरस्वतीभवनपुस्तकालयस्थः, प्रथमाध्यायः, क्रमसंख्या ३८११९। लिपिकालः १५२१।

(ख) वारेन्द्र-रिसर्च-सोसायटी-राजशाही-बंगालतः मुद्रितः, श्रीश्रीशचन्द्रचक्रवर्तिभिः सम्पादितः, १९१३–१९२५।

(ग) काशीस्थतारायन्त्रालये मुद्रितं संस्करणम्, १९६५–१९६७ ख्रि०।

(घ) काशीस्थरत्नापब्लिकेशन्स-कमच्छा-वाराणसीतः मुद्रितः ग्रन्थः। डॉ० श्रीनारायणमिश्रमहोदयैः सम्पादितः, १९८५।

३. 'पदमञ्जरी' मूलपाठसमीक्षार्थम्—

(क) हस्तलिखितो ग्रन्थः सरस्वतीभवनपुस्तकालयस्थः। क्रमसंख्या ३७९५८। लिपिकालः १७३२ (१५३३)।

(ख) हस्तलिखितो ग्रन्थः, काशीहिन्दूविश्वविद्यालयीयसंस्कृतविभागस्थः।

(ग) काशीस्थ 'मेडिकल-हाल' यन्त्रालये मुद्रितं संस्करणम्, १९५२, वैक्रमाब्दः (१८९५ ख्रि०)

(घ) काशीस्थमासिकपण्डितपत्रिकायां मुद्रिता पदमञ्जरी, Vols X-XXI, १८८८–१८९९ ख्रि०।

(ङ) डॉ० श्रीनारायणमिश्रमहोदयैः सम्पादितः काशीस्थरत्नापब्लिकेशन्स-कमच्छा-वाराणसीतः मुद्रितः ग्रन्थः (१९८५ ख्रि०)।

(च) 'पदमञ्जरी' ग्रन्थः संस्कृतपरिषद्, उस्मानिया विश्वविद्यालयतः मुद्रितः, १९८१ ई०, भागद्वयात्मकः।

एतद्व्यतिरिक्तं पदमञ्जरीसंशोधनार्थं श्रीवत्साङ्काचार्यस्य राघवनफेलिसिटेशनग्रन्थे चौखम्बा-ओरियन्टालिया-वाराणसीतः मुद्रितः (१९८२) निबन्धोऽप्यवलोकितः। एवमुपरिनिर्दिष्टानि पुस्तकान्यवलोक्य

संशोधितः ग्रन्थोऽयं प्राकाश्यं नीयते । व्यतिरिक्तमेतद् एतेषु पुस्तकेषु यत्र क्वापि उद्धृतांशेषु त्रुटयोऽवलोकिताः तत्तदाकरग्रन्थेभ्यः मूलपाठं संशोध्य ताः बाहुल्येनापकृता अस्माभिः ।

**पाठान्तरटिप्पण्यः—**

एवं प्रस्तुतसंस्करणस्य संपादनावसरे केचन प्रकाशिताः ग्रन्थाः दृष्टिपथमायाताः । परिशीलनेन तेषु कुत्रचित् स्थलेषु अनवधानताज्ञानजन्याः अशुद्धयोऽप्यनुभूताः । एतद्विषये यद्यपि विद्वद्वरैः डॉ० श्रीनारायण-मिश्रमहोदयैरपि महान् प्रयासोऽकारि, तथापि काश्चन त्रुटयः असंशोधिता एव विद्यन्ते । अस्माभिः तासां संशोधनार्हत्वं विचार्य यथाशक्ति प्रयासो विहितः । प्रथमभागस्थानां दिग्दर्शनमत्र प्रस्तूयते—

| पृ० | स्थलानि | पङ्क्तः | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|---|
| ८ | पद० | ३० | विशेषलणान्वितस्य | विशेषलक्षणान्वितस्य |
| २२ | का० | १ | प्रक्लृप्तः, क्लृप्तः, क्लृप्तवान् | प्रक्लृप्तः, प्रक्लृप्तवान् |
| २८ | न्या० | १९ | अनवयवभूतैस्तुल्यकृतय | अनवयवभूतैस्तुल्याकृतय |
| ३८ | का० | १ | यर्कार्यत्वं | यर्कार्यं |
| ५० | का० | २ | चाश्ग्रहणेषु च ग्रहणं | चाश्ग्रहणेषु च हकारस्य ग्रहणं |
| ६९ | का० | २ | पर्णं नयेः | पर्णं नवेः |
| ८९ | का० | १ | उभयोर्ऋवर्णस्य चान्त० | उभयोर्ऋवर्णस्य लृवर्णस्य चान्त० |
| ९१ | का० | २ | अग्नी इति, माले इति | अग्नी इति । वायू इति । माले इति |
| ११६ | का० | ३–४ | च' इति । उभये । | च' इति उभाभ्यां हेतुभ्यां वसति, उभयोः हेत्वोः वसति । उभये । |
| १२६ | का० | २–३ | नित्यायां प्राप्तायां | नित्यायां सर्वनामसञ्ज्ञायां प्राप्तायां |
| १३५ | का० | ३ | पुरा सूर्यस्योदेतो० | व्युष्टायां पुरा सूर्यस्योदेतो० |
| १३५ | का० | ६ | पुरा जतृभ्यः | पुरा जत्रुभ्यः |
| १३७ | का० | २ | विसृप' इति | विसृपो विरप्शिन् इति । |
| १४३ | का० | २–३ | अदुहितरामिति | अदुहितरामिति । द्युभ्यामित्यत्र 'दिव उत्' इति तपरकरणाद् दीर्घो न भवति |
| १५१ | न्या० | २ | प्राप्तानामनन्तरमानाम् | प्राप्तानामन्तरतमानाम् |
| १५५ | न्या० | ८ | उदात्तानुदात्तस्य | उदात्तादनुदात्तस्य |
| १५५ | पद० | १ | यणो येऽन्तरमा | यणो येऽन्तरतमा |
| १५६ | पद० | ९ | रपत्वं न स्यात् | रपरत्वं न स्यात् |
| १५६ | पद० | १३ | मात्रिकस्य; मात्रिके | मात्रिकस्य मात्रिके |
| १६० | का० | ६ | समीपम् ॥ | प्रतीपम्, समीपम् ॥ |
| १६५ | का० | ३ | किमः कादेशे | 'किमः कः' इति कादेशे |
| १६५ | का० | ५ | ल्यबादेशे कृते | क्त्वो ल्यबादेशे कृते |
| १६५ | का० | ९ | उपस्तुत्य | उपहूत्य उपस्तुत्य |
| १८० | का० | १ | प्रति न | प्रति [अजादेशः] न |
| १८४ | का० | ८ | अक्षन्नमीमदन्त | अक्षन्नपितरोऽमीमदन्त |
| १९३ | पद० | १२ | नेकसंज्ञाकरण० | अनेकसंज्ञाकरण० |

| पृ० | स्थलानि | पङ्क्तिः | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|---|
| २०० | न्या० | २ | ०लक्षणे लुवा । मता | ०लक्षणे वा । लुमता |
| २०९ | पद० | ६ | उदीरता सुभिन्नासु | उदीरतासु भिन्नासु |
| २११ | पद० | १३ | स्वार्थो हि | स्वार्थो [स्वम्, अर्थो] हि |
| २१२ | का० | ६ | अश्वपोषम् । | विद्यापोषम्, अश्वपोषम् । |
| २१२ | न्या० | १ | सित्तद्विशेषाणामित्यत्यादि | सित्तद्विशेषाणामित्यादि । |
| २१३ | का० | ४ | अथैकस्येष्यते | अस्यैकस्येष्यते |
| २१४ | पद० | ५ | त्विकारादिभिः | न त्विकारादिभिः |
| २१६ | पद० | १२ | सामर्थ्यात्तदीया क्रियान्तरेण | सामर्थ्यात्तदीया क्रिया क्रियान्तरेण |
| २२१ | पद० | १ | वृक्षादीनातो (?) | वृक्षादीनामतो स्वातंत्र्यं वास्यादीनामिव तक्षादीनामिव सम्भवति किन्तु वैवक्षिकम् । |
| २२३ | न्या० | ९ | इत्येनानचोऽपि | इत्यनेनानचोऽपि |
| २२४ | का० | १ | सभासन्नयनः | साभासन्नयनः |
| २२४ | न्या० | ६ | [अत्र 'पौरुषेयं नाम''''इत्यारभ्य इति उद्योतः ।' इत्यन्तः ग्रन्थः मुद्रणभ्रमात् न्यासे प्रक्षिप्तः । इयमस्माभिः कृता टिप्पणी ।] | संज्ञा वेदितव्या । तेष्वेव |
| २२५ | पद० | ४ | पाणिनस्यापत्यं पणिनो युवेति | पाणिनस्यापत्यं युवेति |
| २२६ | पद० | ६ | इतश्च | इवश्च |
| २२६ | पद० | ३ | त्यादायॅनिरिति | त्वादायनिरिति |
| २२७ | न्या० | ६ | एङ् प्राचां वेश इति | एङ् प्राचां देश इति |
| २३७ | पद० | १ | बभूविव | बभूव |
| २५० | पद० | ५ | उक्षरत्र | उत्तरत्र |
| २५१ | न्या० | ४ | च्लेरकारस्य | च्लेरिकारस्य |
| २५१ | पद० | २ | आत्मनेपदं ङिति | आत्मनेपदे ङिति |
| २५१ | पद० | १२ | 'अदिताम्' | अनिदिताम् |
| २५७ | का० | ३ | इत्येभ्यः | इत्येतेभ्यः |
| २५७ | पद० | १३ | ञिद्भिः | ञीद्भिः |
| २५९ | न्या० | १ | ऊदुपधाद् | उदुपधाद् |
| २६३ | न्या० | ३ | तेन विकल्पार्थं | ननु विकल्पार्थं |
| २६५ | का० | १ | ऊ ऊ ऊ ३ | उ ऊ उ ३ |
| २६६ | का० | १ | देवदत्ता ३ | देवदत्त ३ |
| २६८ | का० | ४ | देवदत्ता ३, यज्ञदत्ता ३'''' अग्निची३त् सोमसू३त् | देवदत्त ३ यज्ञदत्त ३'''''''' अग्निचि३त् सोमसु३त् |
| २६७ | पद० | ३ | दीर्घसंज्ञायामभावात् | दीर्घसंज्ञाया अभावात् |
| २६८ | न्या० | १३ | अः स्थाने | अचः स्थाने |

| पृ० | स्थलानि | पङ्क्तिः | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|---|
| २७० | न्या० | ८ | अनुदात्तमुच्चैरुच्यत | न चानुदात्तमुच्चैरुच्यते |
| २७० | पद० | १९ | अतिव्याप्तिरव्यस्था | अतिव्याप्तिरव्यवस्था |
| २७३ | पद० | ६ | शिल्पशिक्यकाश्मर्य० | तिल्यशिक्यमत्यकाश्मर्य० |
| २७६ | का० | १ | देवदत्ता ३ | देवदत्त ३ |
| २७८ | का० | ३ | समत्रिणं दहा ३ | समत्रिणं दह ३ |
| २७८ | का० | ४ | गीतय ऊच्यन्ते | गीतय उच्यन्ते |
| २७९ | का० | २ | उच्चैस्ततरां | उच्चैस्तरां |
| २८० | का० | ४ | वीयते । | वीतये । |
| २८१ | का० | २५ | 'व्यवस्थिविकल्पोऽयं'''' इत्यारभ्य भवतीति सिद्धम्' इत्यन्तः पाठः | अधिकोऽयं पाठः । अतः पादटिप्पण्यां स्थापितः । |
| २८५ | पद० | ५ | व्वग्रहे मा. | अवग्रहे मा |
| २८५ | पद० | ५ | व्यवध्यापक | व्यवधायक |
| २८७ | न्या० | १० | अल्मुदायस्य | अल्समुदायस्य |
| २८८ | का० | ४ | पाचकवृन्दाकारिका | पाचकवृन्दारिका |
| २८८ | पद० | ७ | पदान्तर्निरपेक्ष० | पदान्तरनिरपेक्ष० |
| २८८ | पद० | ८ | समं चूर्णमिति | अन्नेन समं चूर्णमिति |
| २९२ | पद० | ६ | सर्वमेकविभक्तिम् | सर्वमेकविभक्तिकम् |
| २९८ | का० | ३ | अर्थवत्समुदायानां''''''' नियमार्थम् । | वार्तिकमिदम् । अतः वार्तिकरूपेण मुद्रितम् । |
| ३०४ | का० | २ | पञ्चशष्कुलिः | पञ्चशष्कुलः |
| ३०५ | पद० | ६ | वचनासामर्थ्याद् | वचनसामर्थ्याद् |
| ३०६ | न्या० | ८ | भाष्यमाणोऽण् | भाव्यमानोऽण् |
| ३२२ | पद० | ७ | तत्रापि न | तत्रापि च |
| ३३० | का० | २ | भागवित्तिश्च भागवित्तिकश्च भागवित्तिकौ | भागवित्तिश्च भागवित्तिकश्च भागवित्तिभागवित्तिकौ |
| ३३५ | न्या० | ५ | स च देवदत्तस्य | स च देवदत्तश्च |
| ३३६ | न्या० | २ | इत्यक्तं | इत्युक्तं |

**सम्पादन-शैली—**

प्रतिसूत्रमत्र उट्टङ्किता प्रथमसंख्या अष्टाध्यायी-सूत्रस्यानुपूर्वि-क्रमावलम्बिनी। सूत्रस्य पश्चाद् गृहीता संख्या तत्सूत्रस्य अष्टाध्यायीक्रमागत-पादस्यान्तर्गत-सूत्रस्य संख्यां बोधयति। तदुपरि कोष्ठके गृहीता संख्या निर्णयसागरमुद्रणालयतः प्रकाशित—'सिद्धान्तकौमुदी'स्थ-सूत्रस्य संख्यां द्योतयति। मन्ये, एतत् शोधच्छात्राणां विद्वद्वराणां वा किमपि उपकाराय संपद्येत। रीतिरियं विद्वद्वरेण्येन डा० आर्येन्द्रशर्ममहोदयेनापि समादृता, सैवाऽनुसृताऽस्माभिरपि।

सुविदितमेव हि इदमस्य ग्रन्थस्याध्येतॄणां यत्—अस्मिञ्च्छास्त्रे निबद्धानि गम्भीरवाक्यान्यतिक्लिष्टानि, तथापि श्रीमद्गुरुचरणेभ्योऽखिल-विद्यापारंगतेभ्यः सम्पूर्णानन्द-संस्कृत-विश्व-विद्यालयस्य व्याकरण-

विभागाध्यक्षचरेभ्यः पण्डितप्रकाण्डेभ्यः श्रीमद्भ्यो मुरलीधरमिश्र-महोदयेभ्यः, श्रीमद्भ्यो भूपेन्द्रपति-त्रिपाठि-महोदयेभ्यः, श्रीमद्भ्यो भूपनारायण-झा-महोदयेभ्यः, श्रीमद्भ्यो रामप्रसादत्रिपाठिमहोदयेभ्यः, श्रीमद्भ्यः कालिकाप्रसादशुक्लमहोदयेभ्यश्च यदुपलब्धं तदेवास्य संस्करणस्योपजीव्यम् ।

अन्ते, काशीहिन्दूविश्वविद्यालयीयसंस्कृतविभागाध्यक्षाः प्राच्य-प्रतीच्योभयविधविद्यापारङ्गताः सूक्ष्म-समीक्षकाः श्रद्धेयाः मनीषिणः डॉ० विश्वनाथभट्टाचार्यमहोदयाः अस्य ग्रन्थस्य प्रास्ताविकं विलिख्यास्मान् भृशमनुगृहीतवन्त इति तेषां कृतज्ञतां प्रकटयामः ।

काशीस्थ-तारायन्त्रालयाधिपतीनां दुर्लभ-प्राचीनसंस्कृतग्रन्थरत्नानां प्रकाशने रतानां श्रीमद्रमाशङ्कर-पण्ड्या-महोदयानामाभारोऽस्माभिः हृदयेन स्वीक्रियते यैः सौष्ठवसम्पन्नं सत्वरञ्चैतत् संस्करणं विद्वत्समक्ष-मुपस्थापितम् ।

यच्छास्त्रं निकषो सदैव विदुषां सूक्ष्मेक्षकाणां धियां
यच्चाश्रित्य बुधैर्व्यधायि विपुलो व्याख्याप्रपञ्चः पुरा ।
तत्राराजत 'काशिका'ऽतुलगुणैस्सम्मोहयन्ती बुधान्
तामाश्रित्य भवेद्वियं कृतिरलं सन्तुष्टये वै सताम् ॥

ज्योतिपर्व
२०४२ वैक्रमाब्दः
१०-११-१९८५

जयशङ्करलाल-त्रिपाठी
सुधाकर-मालवीयः

# भूमिका

भारतीय मनीषियों ने शब्दतत्त्व का सूक्ष्म विवेचन प्राचीन काल से ही आरम्भ कर दिया था। वेदों की सुरक्षा के लिए षडङ्गों—१. शिक्षा, २. कल्प, ३. ज्योतिष, ४. व्याकरण, ५. छन्द, और ६. निरुक्त—की रचना की गई है। इन षडङ्गों में व्याकरण को ही प्रधान कहा गया है—**'मुखं व्याकरणं स्मृतम्'**। उनके गम्भीर अनुशीलन के फलस्वरूप ही प्रातिशाख्यों तथा विभिन्न व्याकरण-ग्रन्थों का प्रणयन हुआ। विश्व-साहित्य में वे प्राचीनतम हैं। महाभाष्यकार ने भी व्याकरणाध्ययन के प्रयोजनों में वेदों की रक्षा को सबसे पहले रखा है—**'वेदानां रक्षार्थमध्येयं व्याकरणम्'**। व्याकरण को प्रारम्भ में शब्दानुशासन कहा जाता था। शब्दानुशासन का विस्तृत एवं विशाल रूप सुदीर्घ वैदिक युग से ही प्राप्त होता है। ऋग्वेद में व्याकरणशास्त्र का उत्स[1] **चत्वारि वाक् परिमिता पदानि**[2]··· के रूप में सर्वप्रथम प्राप्त होता है।[3] तैत्तिरीय एवं शतपथ आदि **ब्राह्मणग्रन्थों** में शब्दों के निर्वचन का प्रारम्भ दृष्टिगोचर होता है। किन्तु **गोपथब्राह्मण** में पाणिनीय व्याकरण में प्रयुक्त अनेक पारिभाषिक शब्दों का सर्वप्रथम विवेचन उपलब्ध होता है—

**"ओङ्कारं पृच्छामः—को धातुः? किं प्रातिपदिकम्? किं नामाख्यातम्? किं लिङ्गम्? किं वचनम्? का विभक्तिः? कः प्रत्ययः? कः स्वर उपसर्गो निपातः? किं वै व्याकरणम्? को विकारः? को विकारी? कतिमात्रः? कतिवर्णः? कत्यक्षरः? कति पदः? कः संयोगः? किं स्थाननादानुप्रदानानुकरणम्"**···? (गोपथ-ब्राह्मणम्, पू० १.२४)।

**यास्क** के **निरुक्त** में वैयाकरणों का मत उद्धृत हैं—**'नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः'**—(नि० १३.२) **वाल्मीकीय रामायण** तथा **महाभारत** के उद्धरणों से यह स्पष्ट है कि संस्कृत भाषा का व्याकरण अत्यन्त प्राचीन है—

**नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।**
**बहु व्याहरतानेन न किञ्चिदपभाषितम्॥** ( वा० रा० कि० का० ३.२९ )
**सर्वार्थानां व्याकरणाद् वैयाकरण उच्यते।**
**तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा॥** ( महाभा०, उद्योग पर्व ४३.६१ )

अन्तिम कड़ी के रूप में, पातञ्जल महाभाष्य के उद्धरण से इस व्याकरणशास्त्र पर अत्यन्त प्राचीनत्व की मुहर लगा दी गयी है—**'पुराकल्पे एतदासीत्—संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते।'** महाभा० (पस्पशा०)।

## पाणिनि-पूर्ववर्ती वैयाकरण

सम्प्रति यद्यपि पाणिनीय अष्टाध्यायी ही सर्वाङ्गपूर्ण और सर्वविद्वज्जनों द्वारा समादृत है। परन्तु पाणिनि की इस अद्भुत कृति में पूर्ववर्त्ती आचार्यों के योगदान को अस्वीकार नहीं किया जा सकता। उनके मतों का सम्यगनुशीलन करके नीरक्षीरविवेकन्याय से पाणिनि ने नियमों, (सूत्रों) की रचना की है।

## अष्टाध्यायी में उल्लिखित आचार्य

अष्टाध्यायी के अध्ययन से यह ज्ञात होता है कि पाणिनि के भी पहले—काश्यप ( पा० सू० १.२.२५ ), सेनक ( पा० सू० ५.४.११२ ), आपिशलि ( पा० सू० ६.१.९२ ), स्फोटायन ( पा० सू० ६.१. १२३ ), चाक्रवर्मण

१. पा० महाभा०, पस्पशाह्निक। २. ऋ० १.१६४.४५।

३. तुलनीय— चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश॥ ऋ० ४.५८.३।

( पा० सू० ६.१.१३० ), भारद्वाज (पा० सू० ७.२.६३), गार्ग्य ( पा० सू० ८.३.२० ), शाकल्य ( पा० सू० ८.३.१९ ), शाकटायन ( पा० सू० ८.४.५० ), गालव (पा० सू० ८.४.६७)–ये दश आचार्य हो चुके थे। यहाँ इनका संक्षिप्त परिचय देना अनुपयुक्त नहीं होगा––

१. काश्यप––पाणिनि ने दो बार इनका उल्लेख किया है।[1] इन्होंने व्याकरण, कल्प[2], छन्दशास्त्र, आयुर्वेद, पुराण और दर्शनशास्त्र के ग्रन्थों का प्रणयन किया था। इनका समय अनुमानतः वि० सं० के पूर्व तीन हजार वर्ष माना जाता है।

२. सेनक––पाणिनि द्वारा एक बार ही इनका उल्लेख हुआ है।[3] इनका समय अनुमानतः २९५० वर्ष वि० सं० पूर्व माना जाता है।

३. आपिशलि––यद्यपि पाणिनि ने इनका उल्लेख एक बार ही किया है[4] तथापि इनके कृतित्व का उल्लेख हमें अनेकत्र प्राप्त होता है। वामन, पाल्यकीर्ति और वर्द्धमान के मत में आपिशलि के पिता का नाम 'अपिशल' था। आपिशल व्याकरण या आपिशलीय परम्परा का उल्लेख महाभाष्यकार ने एक-दो विशिष्ट स्थलों पर किया है। पदमञ्जरी में हरदत्त के उल्लेख से ये पाणिनि से कुछ ही वर्ष पूर्व के जाने जाते हैं। इनका समय विक्रम से ३००० वर्ष पूर्व माना गया है। कात्यायन और पतञ्जलि के समय में भी उस व्याकरण का प्रचार था। पा० सू० ४.१.१४ के महाभाष्य से विदित होता है कि इसे कन्याएँ भी पढ़ती थीं। वामन, न्यासकार, कैयट तथा मैत्रेयरक्षित आदि ने इनका उल्लेख किया है। पाणिनि-शिक्षा के अन्तिम प्रकरण में भी आपिशलि का उल्लेख है। उज्ज्वलदत्त के अनुसार 'बाह्वादित्वात् इञ्' करके 'आपिशलि' बना है। अतः उनके पिता का नाम 'अपिशलि' होना चाहिए। किन्तु बाह्वादि-गण में 'अपिशलि' पद नहीं है। काव्यमीमांसा और वाक्यपदीय की वृषभदेव की टीका में भी 'आपिशलीय' पद का प्रयोग मिलता है। अतः आपिशलि के लिए 'आपिशल' नाम का भी व्यवहार होता था।

४. स्फोटायन––पाणिनि ने एक सूत्र में ही इनका उल्लेख किया है।[5] पदमञ्जरीकार हरदत्त ने इन वैयाकरण का उल्लेख किया है।[6] इनका समय वि० सं० पूर्व २९५० वर्ष माना गया है। ये व्याकरणसम्प्रदाय के प्रसिद्ध 'स्फोटवाद' के आदि प्रवक्ता प्रतीत होते हैं।

५. चाक्रवर्मण––इनका उल्लेख पाणिनि की अष्टाध्यायी[7] और उणादिसूत्रों (३.१४४) में मिलता है। शब्दकौस्तुभ में भट्टोजिदीक्षित ने इनका मत उद्धृत किया है। अपत्यार्थक प्रत्यय के अनुसार इनके पिता का नाम चक्रवर्मा था। गुरुपदहालदार ने वायुपुराण के अनुसार इन्हें काश्यप का पौत्र माना है।[8] इनका समय ३००० वि० सं० पूर्व माना जाता है।

---

१. पा० सू० १.२.२५ तथा ८.४.६७।

२. 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः' ( पा० सू० ४.३.१०३ ) सूत्र पर वार्तिककार कात्यायन के मत से काश्यप कल्प का निर्देश है।

३. पा० सू० ५.४.११। ४. पा० सू० ६.१.९२। ५. पा० सू० ६.१.१२३।

६. स्फोटोऽयनं = परायणं यस्य स स्फोटायनः, स्फोटप्रतिपादनपरो वैयाकरणाचार्यः। ये त्वौकारं पठन्ति, ते नडादिषु अश्वादिषु वा ( स्फोटशब्दस्य ) पाठं मन्यन्ते––पा० सू० ३.१.१२३ पर पदमञ्जरी।

७. पा० सू० ६.१.१३०। ८. व्याकरण-दर्शनेर इतिहास, पृ० ५१९।

६. **भारद्वाज**—अष्टाध्यायी में भारद्वाज का निर्देश गोत्रप्रत्ययान्त 'भारद्वाज' शब्द से किया गया है।[१] यद्यपि ४.२.१४५ में भी भारद्वाज शब्द का प्रयोग है तथापि काशिकाकार जयादित्य के मतानुसार यह 'भारद्वाज' शब्द देशवाची है, आचार्यवाची नहीं। भारद्वाज का व्याकरण-सम्बन्धी मत तैत्तिरीय प्रातिशाख्य में भी मिलता है। इनका समय वि० पूर्व ३००० वर्ष माना गया है। इनके अन्य ग्रन्थ भारद्वाज-वार्तिक, आयुर्वेद-संहिता, अर्थशास्त्र आदि थे।

७. **गार्ग्य**—अष्टाध्यायी और प्रातिशाख्य में उद्धृत मतों से पता चलता है कि इनका व्याकरण भी सर्वाङ्गपूर्ण था। पाणिनि ने तीन बार इनका उल्लेख किया है।[२] निरुक्त, सामवेद-पदपाठ, शालाक्यतन्त्र भूवर्णन, तंत्रशास्त्र, लोकायतशास्त्र, देवर्षिचरित, सामतन्त्र आदि ग्रन्थ भी इनके द्वारा प्रणीत हैं।

८. **शाकल्य**—इनके मतों का उल्लेख पाणिनि ने चार बार किया है।[३] शौनक और कात्यायन के प्रतिशाख्य में भी इनके मतों का उल्लेख है। शाकल्य का मत शाकल नामान्तर से भी प्राप्त है (६.१.१२७ पर म० भा०)। इनके पिता का नाम शकल था। शौनक का काल वि० पू० २९०० वर्ष है। अतः शाकल्य का समय ३१०० वि० पू० है। शाकल्य के व्याकरण में लौकिक-वैदिक उभयविध शब्दों का अन्वाख्यान था। संस्कृत-वाङ्मय में शाकल्य, स्थविर शाकल्य, विदग्ध शाकल्य और वेदमित्र (देवमित्र) शाकल्य ये चार नाम उपलब्ध हैं। पाणिनि द्वारा स्मृत शाकल्य और ऋग्वेद के पदकार वेदमित्र शाकल्य, ये दोनों, युधिष्ठिर मीमांसक के मत से एक ही हैं।[४]

९. **शाकटायन**—अष्टाध्यायी में इनका तीन बार उल्लेख है।[५] वाजसनेयि और ऋक्प्रातिशाख्य में इनका अनेक बार निर्देश है। निरुक्तकार ने शाकटायन का मत उद्धृत किया है।[६] शाकटायन सभी शब्दों को धातुज मानते हैं। काशिका में १.४.८६–८८ के उदाहरणों 'अनुशाकटायनं वैयाकरणाः' और 'उपशाकटायनं वैयाकरणाः' से विदित होता है कि शाकटायन वैयाकरणों में प्रमुख थे। नडादिगण में शकट शब्द आया है। महाभाष्य (३.३.१) के अनुसार शाकटायन के पिता का नाम शकट था। अतः 'नडादिभ्यः फक्' (४.१.९९) से शाकटायन शब्द निष्पन्न है। इसके व्याकरण में लौकिक-वैदिक उभयविध पदों का अन्वाख्यान था। निरुक्त (१.१३) की वृत्ति में दुर्गाचार्य ने लिखा है कि शाकटायनाचार्य ने कई पदों की सिद्धि अनेक धातुओं से की थी और कई पदों की एक-एक धातु से।[७] उनके मत में जातिशब्द, गुणशब्द और क्रियाशब्द—ये तीन प्रकार के शब्द हैं।[८] इनके जिन ग्रन्थों के उल्लेख मिलते हैं वे हैं—दैवतग्रन्थ, निरुक्त, कोष, ऋक्तन्त्र, लघुऋक्तन्त्र, सामतन्त्र, पञ्चपादी उणादिसूत्र और श्राद्धकल्प। इनका समय ई० पू० ३१०० माना गया है।

१०. **गालव**—पाणिनीय अष्टाध्यायी में इनका चार बार उल्लेख हुआ है।[९] व्याकरण के अतिरिक्त संहिता, ब्राह्मण, क्रमपाठ, शिक्षा, निरुक्त, दैवतग्रन्थ, शाकल्यतन्त्र तथा कामसूत्र एवं भू-वर्णन आदि भी इनकी रचनाएँ हैं। भाषावृत्ति में इनका मत उद्धृत है।[१०] इनके अनुसार यण्सन्धि में 'दध्यत्र' और 'मध्वत्र' के स्थान पर 'दधियत्र' और 'मधुवत्र' भी

१. पा० सू० ७.२.६७।
२. पा० सू० ७.३.९९, ८.३.२०, ८.४.६७।
३. पा० सू० १.१.१६, ६.१.१२७, ८.३.१९, ८.४.५१।
४. सं० व्या० शा० का इति० (संक्षिप्त०) पृ० ६८।
५. पा० सू० ३.४.११, ८.३.१८, ८.४.५०।
६. 'तत्र नामाख्यातजानीति शाकटायनो नैरुक्तसमयश्च' (निरु० १.१२)।
७. शाकटायनाचार्योऽनेकैश्च धातुभिरेकमभिधानमनुविहितवान् एकेन चैकम्। (निरु० १.१३ पर दुर्ग०)
८. तदेवं निरुक्तकारशाकटायनदर्शनेन त्रयी शब्दानां प्रवृत्तिः।
जातिशब्दाः, गुणशब्दाः, क्रियाशब्दा इति। (पा० सू० ३.३.१ पर न्यास)
९. पा० सू० ६.३.६१, ७.१.७४, ७.३.९९, ८.४.६७।
१०. इकां यण्भिर्व्यवधानं व्याडिगालवयोरिति वक्तव्यम्। (६.१.७७ पर पुरुषोत्तमदेवकृत भाषावृत्ति)

साधु प्रयोग हैं। 'भूवादयो धातवः' इस सूत्र में इस यण्सन्धि के यण्व्यवधान के पक्ष को पाणिनीय ने भी स्वीकार किया है, ऐसा कुछ लोग मानते हैं। उनका समय वि० संवत् से ३१०० पूर्व माना गया है।

**अष्टाध्यायी में अनुल्लिखित आचार्य**

अष्टाध्यायी में कुछ आचार्यों के मतों का उल्लेख सर्वनाम शब्दों के द्वारा भी किया गया है, जैसे—उदीचाम् (४.१.५३), एकेषाम् (४.१.१७), आचार्याणाम् (८.३.१०४), प्राचाम् (८.३.५)।

पाणिनि द्वारा अनुल्लिखित भी अनेक वैयाकरण पाणिनि से पूर्व विद्यमान थे जिनका निर्देश अन्यान्य ग्रन्थों में उपलब्ध होता है। ये हैं—१. इन्द्र, २. भागुरि, ३. पौष्करसादि, ४. चारायण, ५ काशकृत्स्न, ६. वैयाघ्रपद, ७. माध्यन्दिनि, ८. रौढि, ९. शौनक, १०. गौतम तथा ११. व्याडि।

**पाणिनि और उनका काल (५०० ई० पू०)**

'त्रिकाण्डशेष' में पुरुषोत्तमदेव ने पाणिनि के विभिन्न नाम इस प्रकार लिखे हैं—१. पाणिन, २. पाणिनि, ३. दाक्षीपुत्र, ४. शालङ्कि, ५. शालातुरीय (=सालातुरीय), तथा ६. आहिक। इनका वंश इस आधार पर पं० शिवदत्तशर्मा ने इस प्रकार दिया है—

दक्ष { दाक्षी—दाक्षीपुत्र—पाणिनि
दाक्षि—दाक्षायण व्याडि }

परन्तु युधिष्ठिर मीमांसक ने इसे इस प्रकार बताया है—

व्यड (दक्ष) { पणिन् + दाक्षी (व्याडचा)—पाणिनि
दाक्षि अथवा दाक्षायण—व्याडि }

महाभाष्य में पाणिनि की माता का नाम दाक्षी बताते हुए पाणिनि को दाक्षीपुत्र कहा गया है। षड्गुरुशिष्य ने ऋक्सर्वानुक्रमणी की वेदार्थदीपिका में छन्दःशास्त्र के प्रणेता पिङ्गल को पाणिनि का अनुज कहा है।[1]

पाणिनि के समय के निर्धारण में विद्वानों में अत्यधिक मतभेद है। उपरितम सीमा के रूप में सत्यव्रत सामश्रमी आदि कुछ विद्वान् इनका समय २४०० ई० पू० और राजवाडे एवं वैद्य ९००-८०० ई० पू०; वेलवलकर ७००-६०० ई० पू०; भण्डारकर ७०० ई० पू०, बलदेव उपाध्याय ५०० ई० पू०, मैकडानल ५०० ई० पू०, मैक्समूलर ३५० ई० पू० और निम्नतम सीमा के रूप में कीथ आदि विद्वान् इन्हें ३०० ई० पू० का स्वीकार करते हैं। युधिष्ठिर मीमांसक इनका समय वि० पू० २९०० वर्ष में मानते हैं। डा० वासुदेवशरण अग्रवाल इनकी तिथि ई० पू० पञ्चम शतक का मध्य निर्धारित करते हैं।[2]

**सूत्र, वार्त्तिक और भाष्य**

सूत्र का सामान्य अर्थ 'अत्यन्त लाघव' से कार्य करना है। भामती में सूत्र का लक्षण है—

लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।
सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः॥ (ब्रह्मसूत्र १.१.१ पर भामती)

अर्थात् छोटे रूप में जो सूचित कर दे वह सूत्र है। तदनुसार सूत्र अर्थात् तन्तु के अवयवों के समान अनेक अर्थों को वेष्टित करने वाला अर्थात् अपने में गुम्फित करने वाला 'सूत्र' होता है। यह विस्तृत अर्थों की सूचना देने वाला होता है अर्थात् इनका अभिप्राय संकेतमात्र कर देना होता है।

---

१. ऋक्सर्वा०, षड्गुरु, पृ० ४०। २. 'India as known to Panini' pp. 456–475.

सूत्र का दूसरा लक्षण विष्णुधर्मोत्तरपुराण में इस प्रकार है—

अल्पाक्षरमसन्दिग्धं सारवद् विश्वतो मुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो: विदुः ।।

अर्थात् सूत्र में अल्प अक्षर हों, और जो असन्दिग्ध हो उसे सूत्र कहते हैं। इस प्रकार अष्टाध्यायी में सभी लक्षणों से युक्त सूत्र रूप में व्याकरण के सिद्धान्त प्रस्तुत किये गये।

वार्त्तिक की परिभाषा इस प्रकार है—

उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्त्तिकं प्राहुर्वार्त्तिकज्ञा मनीषिण: ।।

भाष्य की परिभाषा इस प्रकार है—

सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभि: ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ।।

## पाणिनि की अष्टाध्यायी

इतिहासकारों के अनुसार पाणिनि ने 'जाम्बवतीविजय' ( इसे पातालविजय भी कहते हैं ) की भी रचना की थी। परन्तु इनकी कीर्तिपताका अष्टाध्यायी के कारण ही है। इसका स्वरूप नाम से ही स्पष्ट है—आठ अध्याय। इनमें प्रत्येक अध्याय चार-चार पादों में विभक्त हैं। कुल मिलाकर बत्तीस पाद हैं। इसमें लगभग चार हजार सूत्र ( काशिकानुसार ३९९२ ) हैं। यद्यपि आपिशलि का व्याकरण भी आठ अध्यायों में हैं किन्तु 'अष्टाध्यायी' यह शब्द पाणिनीय व्याकरण के लिये ही योगरूढ़ हो गया है।

इसकी गम्भीरता, वैज्ञानिकता और व्यापकता देखकर पाश्चात्त्य आलोचक भी प्रशंसा किये विना नहीं रह सके। अपनी लोकोत्तर प्रतिभा से पाणिनि ने यह अभूतपूर्व कृति प्रस्तुत की है। इसकी जितनी भी प्रशंसा की जाय, थोड़ी है। इसके अनुशीलन से संस्कृत-भाषा का ही नहीं, प्रत्युत प्राचीन भारतीय संस्कृति तथा समाज की अनेक बातें हमारे सामने आती हैं। पाणिनि केवल शब्दशास्त्र के ही पण्डित नहीं थे। उनके व्यापक ज्ञान और सूक्ष्म दृष्टि को देखकर प्रत्येक समालोचक नतमस्तक हुये विना नहीं रह सके। यही कारण है कि काल के कराल हाथों की चपेट से भी पाणिनि प्रभावित नहीं हुये। उनका महत्त्व आज भी सर्वमान्य और निर्विवाद है।

## अष्टाध्यायी का द्विविध अध्ययन

यह स्पष्ट है कि पाणिनि ने अपने समय में विद्यमान विशाल संस्कृत-साहित्य का गम्भीर परिशीलन किया था। पूर्ववर्त्ती वैयाकरणों का अन्धानुकरण न करके तर्कसंगत नियम सूत्ररूप में लिखे थे। इसीलिये इन्हें स्वयं भी छात्रों को पढ़ाना पड़ा था जिसके लिये इन्होंने वृत्तिग्रन्थ भी लिखे थे।

पाणिनीय अष्टाध्यायी के सूत्रों के स्वरूप के नियम में पतञ्जलि ने महाभाष्य में लिखा है कि उत्सर्ग और अपवाद रूप में सूत्रों को बनाकर विशाल शब्दराशि का ज्ञान कराना सम्भव हो गया। इस पद्धति से सूत्रों के प्रणयन में पाणिनि ने महती सावधानी रखी है। अत्यन्त लघुभूत कलेवर वाले सूत्रों से उन्होंने अपने इष्ट की सिद्धि कर ली। इसका आधार सूत्रों की रचना का एक विशेष दृष्टिकोण है। प्रत्येक सूत्र स्वरूप और स्थान दोनों से कुछ भी बदलना इष्ट का बाधक बन जाता है। प्रत्येक सूत्र का स्थान सोंच समझकर निश्चित करके रखा गया है। अपने रूप और स्थान किसी से भी परिवर्तित करके सूत्र का अध्ययन करना इष्टसाधक नहीं बन सकता। इस प्रकार का अध्ययन अष्टाध्यायी-क्रमानुसारी कहा जाता है।

इसमें सूत्रार्थ के अध्ययन पर विशेष ध्यान दिया जाता है। परन्तु कालान्तर में लक्ष्य ( =प्रयोग ) को प्रधानता दी जाने लगी और अध्ययन की दो धारायें बन गयीं।

**(क) अष्टाध्यायी-क्रम**

पाणिनि ने अष्टाध्यायी में सूत्रों के उपन्यास में एक विशेष क्रम का ध्यान रखा है। उसका रहस्य कभी-कभी अति गूढ़ भी होता है। परन्तु यदि धैर्य के साथ मनोयोगपूर्वक इसी क्रम से अध्ययन किया जाय तो कुछ समय बाद इसके लाभ सामने आने लग जाते हैं। पाणिनि के उद्देश्य की सिद्धि भी इसी के अनुसार अध्ययन से होती है। सभी प्राचीन व्याख्यायें इसी क्रम को मानकर लिखी गई। आज व्याकरण-ज्ञान की अपरिपक्वता में इस क्रम के अध्ययन का अभाव ही प्रमुख कारण है। कात्यायन के वार्त्तिक और पतञ्जलि का महाभाष्य अष्टाध्यायी-क्रम पर ही आधृत हैं। यह काशिकावृत्ति इस क्रम का परम उपयोगी ग्रन्थ माना जाता है।

**(ख) प्रक्रिया-क्रम**

पाणिनि से लेकर एक लम्बी अवधि तक व्याकरण का अध्ययन अष्टाध्यायीस्थ सूत्रों के क्रमानुसार ही प्रचलित होता रहा। परन्तु कुछ विद्वानों के दृष्टिकोण में परिवर्तन आया और प्रचलित पद्धति में परिवर्तन करके एक नया रूप दिया गया। अभी तक सूत्रार्थ-ज्ञान की प्रधानता भी, अब लक्ष्यसिद्धि-मात्र-प्रधान होने लगी। इसमें साधुत्व की प्रक्रिया क्रमानुसार सूत्रों का उपस्थापन किया जाने लगा। इससे उपयोगी आंशिक ज्ञान में शीघ्रता प्रतीत होने लगी।

प्रक्रिया-क्रम में सबसे प्राचीन ग्रन्थ ११ वीं शती के धर्मकीर्ति का **रूपावतार** है। इसके बाद विमल सरस्वती की **रूपमाला** का स्थान है। प्रक्रिया-क्रम के प्रारम्भिक महत्त्वपूर्ण ग्रन्थों में रामचन्द्राचार्य की 'प्रक्रियाकौमुदी' और इसके बाद भट्टोजि दीक्षित की 'वैयाकरण-सिद्धान्त कौमुदी' अति प्रसिद्ध है। प्रक्रिया-कौमुदी में केवल लौकिक शब्दों पर ही विचार है। किन्तु सिद्धान्तकौमुदी में लौकिक एवं वैदिक उभयविध शब्दों की प्रक्रिया का विवेचन है। इसमें सम्पादक ने अपनी बुद्धि के अनुसार प्रकरणों की कल्पना करके लक्ष्यों के आधार पर सूत्रों को प्रस्तुत किया है। आजकल यही पद्धति विशेष प्रचलित है। भट्टोजि दीक्षित के शिष्य वरदराजाचार्य द्वारा लिखित 'मध्य-सिद्धान्तकौमुदी' और 'लघुकौमुदी' अति लोकप्रिय हैं।

**अष्टाध्यायी-क्रम का वैशिष्ट्य**

किसी भी मूल ग्रन्थ के लेखक की अपनी एक योजना होती है, एक उद्देश्य होता है, तदनुसार ही वह लिखता है। पाणिनि की भी अपनी योजना थी, उद्देश्य था, उसी के अनुसार उन्होंने सूत्रों का प्रणयन करके उन्हें स्थानविशेष पर रखा। यदि इसका उल्लंघन करके अध्ययन किया जाता है तो निश्चित ही उक्त उद्देश्य की सिद्धि नहीं हो सकती। उन्होंने सूत्र शैली को अपनाया है और पूर्ववर्ती पद या पदसमूह को अग्रिम सूत्रों से सम्बद्ध करने के लिये 'अनुवृत्ति' पद्धति मानी है। इसलिये आगे केवल अतिरिक्त अंश ही लिखने की आवश्यकता पड़ी। कहीं-कहीं अधिकारसूत्र मानकर अपेक्षित सभी सूत्रों में उसका सम्बन्ध कर लिया गया है। इस प्रकार सूत्रों के स्वरूप में अति लाघव सम्भव हो सका और अध्येता को इसका पूरा लाभ मिलता है। प्रक्रिया के अनुसार पूर्ववर्त्ती सूत्र की अपेक्षा परवर्त्ती सूत्र की बलवत्ता मानी जाती है—"विप्रतिषेधे परं कार्यम्' ( १.४.२ ) इसका ज्ञान अष्टाध्यायी-क्रमानुसार अध्ययन से ही सम्भव है। अत्यन्त प्रसिद्ध सूत्र 'पूर्वत्रासिद्धम्' ( ८.२.१ ) में संकेतित 'पूर्व के प्रति पर असिद्ध होता है' का ज्ञान अष्टाध्यायी-क्रम के अध्येता को ही सरलतया हो पाता है। प्रत्याहार-प्रक्रिया का समुचित ज्ञान भी इसी क्रम से अध्ययन में सुगम है।

प्रक्रिया-क्रम में शब्दरूपसिद्धि की प्रधानता है। अतः प्रक्रियांश का अच्छा ज्ञान सम्भव हो जाने पर भी सूत्रार्थ-सम्बन्धी अपेक्षित सम्यग् ज्ञान अपूर्ण ही रहता है। इसके लिये सूत्र के साथ-साथ वृत्ति भी रटनी पड़ती है। यह दोहरा

**वित्तिकौ । कुत्सा सौवीरत्वं च भागवित्तिकस्यापरो विशेषो विद्यते ॥**

**१४१. स्त्री पुंवच्च ॥ ६६ ॥ ( ९३२ )**

**'शेष' इति वर्त्तते, 'वृद्धो यूना' इति च सर्वम् । स्त्री वृद्धा यूना सहवचने शिष्यते तल्लक्षणश्चेदेव विशेषो भवति । पुंस इवास्याः कार्यं भवति । स्त्र्यर्थः पुमर्थवद् भवति । गार्गी च गार्ग्यायणश्च—गार्ग्यौ । वात्सी**

**न्यासः**

**कश्चेति** । भागवित्तिशब्दाद् यून्यपत्ये 'गोत्रस्त्रियाः कुत्सने ण च' इत्यतः 'कुत्सने' इत्यनुवृत्तौ 'वृद्धाट्ठक् सौवीरेषु बहुलम्' इति ठक् ॥ ६५ ॥

**स्त्री पुंवच्च** ॥ स्त्र्यर्थस्य वैरूप्यकारणस्याधिक्यात् पूर्वेण न सिध्यतीति वचनम् । **पुंवच्चेति** वचनादतिदेशोऽयम् । **स्त्रीति** । स्त्रीप्रत्ययग्रहणं वेदं स्यात्? स्त्र्यर्थवृत्तिशब्दस्य वा ग्रहणम्? अर्थग्रहणं वा? यदि स्त्रीप्रत्ययस्य ग्रहणं स्यात्, ततोऽनेन तस्यैव निवृत्तिः क्रियते—पुंवत् स्त्रीप्रत्ययो भवतीति, न तु स्त्र्यर्थस्य निवृत्तिः क्रियते; ततो गार्ग्यश्च गार्ग्यायणाश्चेति गर्गा इत्यत्र 'अस्त्रियाम्' इत्यनुवर्त्तमाने 'यञञोश्च' इति लुङ् न स्यात्; इह तु गर्गान् पश्यतीति 'तस्माच्छसो नः पुंसि' इति नत्वं न स्यात् । द्वितीये तु पक्षे स्त्र्यर्थवृत्तेः शब्दस्यानेन पुंवद्भावः क्रियते, न तु स्त्रीत्वस्य निवृत्तिः; तथापि स एव दोषः स्यात् । अर्थग्रहणे तु न कश्चिद् दोष इत्यतः स्त्र्यर्थस्येदं ग्रहणमिति मत्वाह—**स्त्र्यर्थः पुंवद्भवतीति** । कथं पुनरर्थस्येदं ग्रहणं लभ्यते? उच्यते; स्त्रीप्रत्ययानां तावदेतद् ग्रहणं न भवति; अस्वरितत्वात् । स्त्र्यर्थवृत्तेरपि शब्दस्य ग्रहणं न भवति; अप्राधान्यात् । अप्राधान्यं तु तस्याभिधेयपारतन्त्र्यात् । अर्थस्याप्राधान्यमपारतन्त्र्यात् । प्रधानगुणसन्निपाते तु प्रधानस्य ग्रहणं न्याय्यम्, अतः स्त्र्यर्थ एव गृह्यते । **गार्गी, वात्सी चेति** । गार्ग्यवात्स्यशब्दाभ्यां 'यञश्च' इति

**पदमञ्जरी**

त्वात्? एवकारेण तु व्यावर्त्यते, न ह्यत्र तल्लक्षण एव विशेषस्तदाह—**कुत्सा सौवीरत्वं चापरो विशेष इति** । विशेषहेतुरित्यर्थः ॥ ६५ ॥

**स्त्री पुंवच्च** ॥ स्त्रीत्वस्य वैरूप्यकारणस्याधिक्याद्वचनं पुंवच्चेति वक्ष्यामीति च । अत्र स्त्रीशब्दस्य स्वरितत्वे स्त्र्यधिकारविहितानां टाबादीनां ग्रहणादयमर्थो भवति—पुंवत् स्त्रीप्रत्ययो न भवति । यथा पुंवदस्यास्तनावित्यभावातिदेशस्तद्वत् । ततश्च स्त्रीत्वस्यानिवृत्तत्वाद् गार्ग्यश्च स्त्रियो गार्ग्यायणश्च गर्गा इत्यत्र 'यञञोश्च' इति लुग् न स्यात् । 'अस्त्रियाम्' इत्यधिकारात् प्रसज्यप्रतिषेधेऽयं दोषः । पर्युदासे तु शिष्यमाणस्य निवर्त्तमानार्थाभिधायित्वादस्ति स्त्रीसदृशोऽर्थ इति सिद्धयति । इह तु गर्गान्पश्येति स्त्रीत्वस्यानिवृत्तत्वान्नायं पुंसां बहुत्वे शस् उत्पन्न इति नत्वं न स्यात् । स्त्र्यर्थवृत्तेः शब्दस्य तु ग्रहणे स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवतीत्यर्थः स्यात् । स्त्रीत्वं त्वनुवृत्तमेव । तत्र यद्यपि गर्गा इति बहुषु पुंशब्दस्य रूपमति तस्मिन्नतिदिष्टे जसादिषु न दोषः, नत्वं तु विभक्तिकार्यं न स्यात् । एवं स्त्र्यर्थग्रहणे तु पुमर्थातिदेशात्तत्प्रतिबद्धानां कार्याणां सिद्धिरिति न क्वचिद् दोषः । **स्त्रीति** चोक्तेऽर्थ एव प्रतीयते । शब्दानामर्थपरत्वात्स्वरूपग्रहणं त्वनाशङ्क्यमेव; वृद्धो यूनेत्यनुवर्त्तनाद् । अतोऽर्थस्यैव ग्रहणमित्याह—**स्त्र्यर्थः पुमर्थवद्भवतीति** । **गार्गी**

**भावबोधिनी**

भागवित्तिश्च भागवित्तिकश्च—भागवित्तिभागवित्तिकौ । भागवित्तिक की अन्य विशेषता है—कुत्सा और सुवीरदेशोत्पत्ति ।'

[ भगवित्त शब्द से गोत्रापत्य अर्थ में इञ् प्रत्यय होकर भागवित्ति बनता है । इस भागवित्ति शब्द से युवापत्य अर्थ में 'वृद्धाट्ठक् सौवीरेषु बहुलम्' (पा० सू० ४।१।१४८) से ठक्=इक् प्रत्यय होता है । इससे दो अर्थ अधिक प्रतीत होते हैं—(१) कुत्सा और (२) सौवीरत्व = सुवीर देश में उत्पन्न होना । अतः एकशेष नहीं होता है । केवल युवप्रत्ययान्त का अर्थ रहने पर एकशेष हो सकता था ] ॥ ६५ ॥

'शेषः' इसकी और 'वृद्धो यूना' इस सबकी अनुवृत्ति होती है । स्त्री वृद्ध [ वृद्धप्रत्ययान्त स्त्रीलिङ्ग ] शब्द, युवप्रत्ययान्त के साथ कहने पर, शेष बच जाता है, यदि उनमें वृद्ध तथा युवाप्रत्ययनिमित्तक ही वैरूप्य हो [ और सब समान हो । ] पुरुष के समान इसके कार्य होते हैं, स्त्रीलिङ्ग का अर्थ पुंलिङ्ग के समान हो जाता है, पुंवत् हो जाता है ।

च वात्स्यायनश्च —वात्स्यौ । दाक्षी च दाक्षायणश्च—दाक्षी ॥

## १४२. पुमान् स्त्रिया ॥ ६७ ॥ ( ९३३ )

'तल्लक्षणश्चेदेव विशेषः' इति वर्त्तते । 'वृद्धो यूना' इति निवृत्तम् । स्त्रिया सहवचने पुमान् शिष्यते, स्त्री निवर्त्तते । स्त्रीपुंसलक्षणश्चेदेव विशेषो भवति । ब्राह्मणश्च ब्राह्मणी च—ब्राह्मणौ । कुक्कुटश्च कुक्कुटी च—कुक्कुटौ । तल्लक्षणश्चेदेव विशेष इत्येव कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ ।

**न्यासः**

ङीप्, पूर्ववदकारयकारलोपौ । दाक्षी इति । पूर्ववत् ङीप् । दाक्षायणश्चेति । दाक्षेरपत्यमिति 'यञिञोश्च' इति फक् ॥ ६६ ॥

**पुमान् स्त्रिया ॥ स्त्रीपुंसलक्षणश्चेदेव विशेष इति ।** यद्येवम्, इह न स्यात्—गौश्चायं गौश्चेयमित्येतौ गावौ तिष्ठत इति, न ह्यत्र स्त्रीपुंसकृतः कश्चिद् विशेषोऽस्ति ? मा भूदनेन, 'सरूपाणाम्' इत्यादिना भविष्यति ? नैतदस्ति; यदि हि तेन स्यात् स्त्रीशब्दस्याप्येकशेषः प्रसज्येत । ततश्च स्त्रीलिङ्गतापि स्यात्, लिङ्गमशिष्यं लोकाश्रयत्वात् । स्त्रीलिङ्गस्यैकशेषे कृते पुंस्त्वं विवक्षितव्यमित्यदोषः ।

अथ वा, पुमानिति योगविभागः क्रियते । तेनेहाप्यसत्यपि स्त्रीपुंसकृते विशेषे पुंस एवैकशेषो भवति । न चैवं सत्यतिप्रसङ्गो भवति; योगविभागादिष्टसिद्धेरिति । **ब्राह्मणी, कुक्कुटी, मयूरीति** । 'जातेरस्त्रीविषयादयोपधात्' इति ङीष् । **कुक्कुटमयूर्याविति** । अत्र न केवलं स्त्रीपुंसकृतो विशेषः, किं तर्हि ? आकृतिश्रुतिकृतोऽपि ।

**पदमञ्जरी**

**चेत्यादि** । गार्ग्यवात्स्यशब्दाभ्यां 'यञश्च' इति ङीप् । **दाक्षीति** । 'इतो मनुष्यजातेः' दाक्षी इति ङीषि निवृत्ते इञन्ताद् द्विवचने 'प्रथमयोः' इति दीर्घः । इदमपि द्वन्द्वनिवृत्त्यर्थमेव वचनम् ॥ ६६ ॥

**पुमान् स्त्रिया ॥ स्त्रीपुंसलक्षणश्चेदेव विशेष इति** । पदान्तरगम्येऽपि तल्लक्षणे विशेषे भवति, यथा—गौश्चायं गौश्चेयमिति एतौ गावौ चरत इति । एवं कन्याखुकृकवाकुग्रामणीखलपूप्रभृतिषु पुंसः शेषो वेदितव्यः । इह कस्मान्न भवति—हंसश्च वरटा च कच्छपश्च डुलिश्च ऋश्यश्च रोहिच्च अश्वश्च वडवा च पुरुषश्च यौषिच्चेति, सर्वत्राप्यत्र स्त्रीपुंसकृत एव विशेषः ? 'सरूपाणाम्' इति वर्त्तते, तेन समानायां प्रकृतौ यत्र स्त्रीपुंसकृत एव विशेषस्तत्रैव भवति । इह तु ब्राह्मणवत्सश्च ब्राह्मणीवत्सा चेत्यत्र प्राप्नोति, नैष दोषः; स्त्रीपुंसयोः सहविवक्षायामेकशेषः । सा च प्रधानयोरेव भवतीति यत्र प्रधानस्त्रीपुंसकृत एव विशेषस्तत्रै-

**भावबोधिनी**

उदा०—गार्गी च गार्ग्यायणश्च—गार्ग्यौ, वात्सी च वात्स्यायनश्च—वात्स्यौ । दाक्षी च दाक्षायणश्च—दाक्षी ।

[ गर्गस्य गोत्रापत्यं स्त्री इस अर्थ में गार्ग्य से ङीप् प्रत्यय तथा यलोप आदि करने पर गार्गी बनता है । गर्गस्य युवापत्यम्—अर्थ में गार्ग्यायणः बनता है । इन दोनों का द्वन्द्व करने पर वृद्धप्रत्ययान्त स्त्री 'गार्गी' शेष बचती हैं, परन्तु इसका पुंवद्भाव करने पर 'गार्ग्य' हो जाता है । इसी के द्विवचन में—गार्ग्यौ—बना है । गार्गी = गर्ग की पौत्री और गार्ग्यायण = गर्ग का प्रपौत्र—इन दोनों का ज्ञान होता है । इसी प्रकार और प्रयोगों में भी समझना चाहिये ] ॥ ६६ ॥

'तल्लक्षणश्चेदेव विशेषः' इसकी अनुवृत्ति होती है । 'वृद्धो यूना' इसकी निवृत्ति होती है । स्त्री-प्रत्ययान्त के साथ कहने पर पुरुष ( पुंल्लिङ्ग ) शेष बचता है, स्त्री ( प्रत्ययान्त ) की निवृत्ति हो जाती है । यदि स्त्रीपुंसलक्षण [ स्त्री एवं पुरुष के बोधक प्रत्ययमूलक ] भिन्नता हो तो । ब्राह्मणश्च ब्राह्मणी च—ब्राह्मणौ । कुक्कुटश्च कुक्कुटी च—कुक्कुटौ । [ यहाँ पुंल्लिङ्ग शब्द शेष बचता है । उसी का द्विवचन होता है । ] तल्लक्षण = स्त्रीत्व एवं पुंस्त्व द्वारा किया गया वैरूप्य रहने पर ही [ एकशेष रहता है । अतः इसमें नहीं ]—कुक्कुटश्च मयूरी च—कुक्कुटमयूर्यौ । [ इनमें प्रकृति = आकृतिकृत विरूपता भी है । ]

**एवकारः किमर्थः ? इन्द्रश्च इन्द्राणी चेन्द्रेन्द्राण्यौ। 'पुंयोगादाख्यायाम्' ( ४.१.४८ ) इत्यपरो विशेषः। पुमानिति किम् ? प्राक्च प्राची च प्राक्प्राच्यौ। 'प्राक्' इत्यव्ययमलिङ्गम् ॥**

**१४३. भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥ ६८ ॥ ( ९३४ )**

**यथासंख्यं भ्रातृपुत्रशब्दौ शिष्येते सहवचने स्वसृदुहितृभ्याम्। स्वस्रा सहवचने भ्रातृशब्दः शिष्यते—भ्राता च स्वसा च—भ्रातरौ। दुहित्रा सहवचने पुत्रशब्दः शिष्यते—पुत्रश्च दुहिता च—पुत्रौ ॥**

**१४४. नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ॥ ६९ ॥ ( ९३५ ॥**

**'तल्लक्षणश्चेदेव विशेषः' इति वर्त्तते। नपुंसकानपुंसकमात्रकृते विशेषेऽनपुंसकेन सहवचने नपुंसकं**

**न्यासः**

**इन्द्राणीति**। 'इन्द्रवरुण' इत्यादिना ङीष्, आनुगागमश्च। **प्राक् च प्राचीति**। प्राञ्चतीति प्रपूर्वादञ्चतेः 'ऋत्विक्' इत्यादिना क्विन्, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्। क्विनन्ताद् 'दिक्छब्देभ्यः' इत्यादिनाऽस्तातिप्रत्ययः। तस्य 'अञ्चेर्लुक्' इति लुक्। **प्राचीति**। प्राक्छब्दाद् 'उगितश्च' इत्यत्राञ्चतेश्चोपसंख्यानाद् ङीप्। **प्रागित्यव्ययमिति**। 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वम् ॥ ६७ ॥

**भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥ ६८ ॥ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ॥ अनपुंसकेनेति किमित्यादि**। ननु च विना नपुंसकेनापि सहवचनेन सरूपाणामित्यादिनैकशेषो भवत्येव, तत् कोऽत्र विशेषः, यस्तेनैकशेष

**पदमञ्जरी**

वैकशेषः, इह त्वप्रधानकृतोऽपीत्येकशेषाभावः। इहापि मृगक्षीरादिवज्जातिविवक्षायां कुक्कुटावित्यादि सिद्धम्। द्वन्द्वनिवृत्त्यर्थंन्तु वचनम्। **प्रागित्यव्ययमिति**। प्रपूर्वादञ्चतेः क्विन्नन्तादस्तातेः 'अञ्चेर्लुक्' इति लुकि 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वं सत्त्वासत्त्वयोर्द्वन्द्वैकशेषौ चिन्त्यौ ॥ ६७ ॥

**भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥** इदमपि द्वन्द्वनिवृत्त्यर्थं वचनम्। स्वसृशब्दस्य ह्येकापत्यत्वं निमित्तम्, दुहितृशब्दस्यापत्यत्वमेवमेव भ्रातृपुत्रशब्दयोः। स्त्रीत्वं पुंस्त्वं चोभयत्र विशेषः। तत्र 'भ्रातरौ पुत्रौ' इति स्त्रीपुंस्त्वाविवक्षायां सिद्धं स्वसृदुहित्रोरभिधानम्। एकशेषारम्भेऽप्ययमेव निर्वाहः ॥ ६८ ॥

**नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ॥ शुक्ला च शुक्लं चेति**। विभक्तौ विभक्त्यन्तयोश्चासारूप्यादप्राप्त एकशेषः, शुक्लं च शुक्लश्चेति विभक्त्यन्तयोरसारूप्यम्। विभक्तौ सारूप्येऽपि पुंनपुंसकयोः पर्यायः स्यादिति वचनम्, एकवद्भावार्थं च। **तल्लक्षणश्चेदेव विशेष इति वर्तत इति। शुक्लं च कृष्णश्चेत्यत्र**

**भावबोधिनी**

एवकार—किसलिये है ? इन्द्रश्च इन्द्राणी च इन्द्रेन्द्राण्यौ। 'पुंयोगादाख्यायाम्' (पा० सू० ४।१।४८) यह अधिक विशेष है।

[ 'पुंयोगादाख्यायाम्' (पा० सू० ४।१।४९) के बाद 'इन्द्रवरुण०' (४।१।४०) आदि सूत्र हैं। वह उक्त सूत्र के अर्थ में ही ङीष् और आनुक् करता है। जो पुमाख्या = पुंस्त्वकथन, पुरुषयोग पुरुषवाचक प्रवृत्तिनिमित्त के आरोप से, स्त्री में होती है उससे ङीष् और आनुक् होते है। अतः इन्द्राणी से केवल स्त्रीत्व अर्थ ही नहीं अपितु 'पुंयोग' यह अतिरिक्त अर्थ भी प्रतीत होता है। अतः एकशेष नहीं होता है। ]

पुमान् [पुंलिङ्ग—] इसका क्या फल है प्राक् च प्राची च – प्राक्प्राच्यौ। यहाँ प्राक् यह अव्यय अलिङ्ग = लिङ्गरहित है ॥ ६७ ॥

(१) स्वसा और (२) दुहिता शब्दों के साथ कहे जाने पर क्रमशः (१) भ्रातृ और (२) पुत्र शब्द शेष रहते हैं। स्वसा के साथ कहने पर भ्रातृ शब्द शेष बचता है—भ्राता च स्वसा च—भ्रातरौ। और दुहिता के साथ कहने पर पुत्र शब्द शेष बचता है—पुत्रश्च दुहिता च पुत्रौ। [ इस प्रकार भ्रातरौ = भाई तथा बहिन, पुत्रौ = पुत्र और पुत्री—इन दोनों का बोध होता है ] ॥ ६८ ॥

'तल्लक्षणश्चेदेव विशेषः' इसकी अनुवृत्ति होती है। केवल नपुंसकत्व और अनपुंसकत्व द्वारा कृत विशेष = वैरूप्य में

शिष्यते, एकवच्चास्य कार्यं भवति अन्यतरस्याम्। शुक्लश्च कम्बलः, शुक्ला च बृहतिका, शुक्लं च वस्त्रं, तदिदं शुक्लम्, तानीमानि शुक्लानि ( म० भा० १.२.६९ )।

अनपुंसकेनेति किम् ? शुक्लं च शुक्लं च शुक्लं च शुक्लानि। 'एकवच्च' इति न भवति॥

१४८. पिता मात्रा ॥ ७० ॥ ( ९३६ )॥

'अन्यतरस्याम्' इति वर्त्तते, न 'एकवत्' इति। मात्रा सहवचने पितृशब्दः शिष्यते अन्यतरस्याम्। माता च पिता च पितरौ। मातापितराविति वा॥

**न्यासः**

विधीयमानः, अनेनैव चेत्यत आह—**एकवच्चेति न भवतीति**। यद्यनेनैकशेषः स्यात्, पक्ष एकवद्भावः स्यात्। तेन त्वेकशेषे सति न भवति। अथास्येति किमर्थमुच्यते ? यद्यस्येति नोच्येत, उत्तरत्राप्येकवच्चेत्यनुवृत्तिः स्यात्। ततश्चोत्तरत्र तु यस्यैकशेषः करिष्यते, तस्यैकवद्भावः प्रसज्येत। तस्मादस्यैव नपुंसकस्यैकवद्भावो यथा स्यात्। उत्तरत्र तु यस्यैकशेषः करिष्यते, तस्य मा भूदित्येवमर्थमस्येति वचनम्। अस्येति हि वचने सति मा भूदस्य वैयर्थ्यमित्युत्तरत्राप्येकवच्चेति नानुवर्त्तते। ननु चास्वरितत्वादेव नानुवर्त्तिष्यते। एवं तर्हि तदेवा-स्वरितत्वमनेन प्रकारेणाख्यायते विस्पष्टार्थम्। एवकारोऽत्रानुवर्त्तते। तेन हिमञ्च हिमानी च हिमहिमान्यौ, अरण्यञ्चारण्यानी चारण्यारण्यान्याविद्यत्र न भवति। इन्द्रवरुणादिसूत्रेण 'हिमारण्ययोर्महत्त्वे' इति वचनात् महत्त्वमपरो विशेषः॥ ६९॥

**पिता मात्रा॥ पितराविति**। 'ऋतो ङि' इति गुणः। **मातापितराविति**। 'आनङृतो द्वन्द्वे' इत्यानङ्, अभ्यर्हितत्वान्मातुः पूर्वनिपातः॥ ७०॥

**पदमञ्जरी**

मा भूत्। एवकारस्तु हिमहिमान्यौ अरण्यारण्यान्याविद्यत्र मा भूदिति। 'अत्र हिमारण्ययोर्महत्त्वे' इति महत्त्वमपरो विशेषः, अन्यतरस्यांग्रहणमानन्तर्यादेकवच्चेत्यनेन सम्बध्यते, न त्वेकशेषेण चेत्याह—**एक-वच्चेत्यादि**। अस्य ग्रहणमेकवच्चेत्यस्योत्तरत्रानुवृत्तिर्मा भूदिति। इह शुक्लेन च वस्त्रेण शुक्लेन च कम्बलेन तेनानेन शुक्लेनेति तल्लक्षणविशेषाभावादेकशेषो न प्राप्नोति, सामान्यविवक्षायामेकशब्दत्वमेकवचनं नपुंसकत्वं च भविष्यति। यद्येवम्, तदिदं शुक्लमित्यत्राप्येवमेव भविष्यति, नार्थ एतेन ? द्वन्द्वनिवृत्त्यर्थं तु वचनम्।

**अनपुंसकेनेति किमिति**। नपुंसकेनापि सहवचने सरूपाणामित्येकशेषेण भवितव्यमिति प्रश्नः, तेन यथा स्यादनेन मा भूदिति प्रत्युत्तरम्। को न्वत्र विशेष इत्यत आह—**एकवच्चेति**॥ ६९॥

**पिता मात्रा॥ मातापितराविति**। अभ्यर्हितत्वान्मातुः पूर्वनिपातः, 'पितुर्दशगुणं माता गौरवेणाति-रिच्यते'। पितराविद्यभिधानं जनयितृत्वमात्रविवक्षायां लिङ्गाविवक्षायां समर्थनीयम्। एकशेषारम्भेऽपि द्वन्द्वस्त्विष्यत एवेति नार्थ एतेन॥ ७०॥

**भावबोधिनी**

अनपुंसक के साथ कहे जाने पर नपुंसक ही शेष बचता है। और विकल्प से इसका एकवद्भाव हो जाता है। उदा०—शुक्लश्च कम्बलः, शुक्ला च बृहतिका ( दुपट्टा ), शुक्लं च वस्त्रम्—(१) तद् इदम् शुक्लम्। [ इसमें नपुंसकलिङ्ग और वैकल्पिक एकवद्भाव हुआ है। एकवद्भाव न होने पर बहुवचन होता है—] (२) तानि इमानि शुक्लानि।

अनपुंसक के साथ—इसका क्या फल है ? शुक्लं च शुक्लं च शुक्लं च—शुक्लानि। [ यहाँ सभी नपुंसक है अतः ] एकवद्भाव नहीं होता है॥ ६९॥

'अन्यतरस्याम्' = विकल्प इसकी अनुवृत्ति होती है, 'एकवत्' की नहीं होती है। माता के साथ कहे जाने पर पितृ शब्द शेष बचता है विकल्प से। उदा०—माता च पिता च—पितरौ। अथवा मातापितरौ। [ दोनों शब्दों का अर्थ है—माता और पिता। ]॥ ७०॥

**१४६. श्वशुरः श्वश्र्वा ॥ ७१ ॥ ( ९३७ )**

**'अन्यतरस्याम्' इति वर्तते। श्वश्र्वा सहवचने श्वशुरशब्दः शिष्यते अन्यतरस्याम्। श्वशुरश्च श्वश्रूश्च—श्वशुरौ। श्वश्रूश्वशुराविति वा॥**

**१४७. त्यदादीनि सर्वैर्नित्यम् ॥ ७२ ॥ ( ९३८ )**

**त्यदादीनि शब्दरूपाणि सर्वैः सहवचने नित्यं शिष्यन्ते त्यदादिभिरन्यैश्च। सर्वग्रहणं साकल्यार्थम्। नित्यग्रहणं विकल्पनिवृत्त्यर्थम्। स च देवदत्तश्च—तौ। यश्च देवदत्तश्च—यौ।**

**❀ [1]त्यदादीनां मिथो यद्यत्परं तत्तच्छिष्यते ❀। स च यश्च—यौ। यश्च कश्च—कौ॥**

**न्यासः**

**श्वशुरः श्वश्र्वा॥ श्वश्रूश्वशुराविति।** पूर्ववत् पूर्वनिपातः॥ ७१॥

**त्यदादीनि सर्वैर्नित्यम्॥ सर्वग्रहणं साकल्यार्थमिति।** विना तेनानपुंसकेनेत्यस्यानुवृत्तिराशङ्क्येत, ततश्च नपुंसकेन सह न स्यात्। अथ वा—तल्लक्षणश्चेदेव विशेष इत्येतदिहानुवर्त्तेत इत्याशङ्क्येत, ततश्च यत्र त्यदादिकृत एव विशेषस्तत्रैव स्यात्—स च यश्च यावित्यादि, इह तु न स्यात्—स च देवदत्तश्च ताविति। अतः सर्वग्रहणम्। **स च देवदत्तश्च ताविति।** यदा विशेषविवक्षा तदैतदुदाहरणम्, यदा तु सामान्यविवक्षा, तदा देवदत्तोऽपि तच्छब्देन सम्बध्यत इति 'सरूपाणाम्' इत्यनेनैव सिध्यति। **यद् यत् परमिति।** गणपाठापेक्षं परत्वं वेदितव्यम्॥ ७२॥

**पदमञ्जरी**

**श्वशुरः श्वश्र्वा।** पितृश्वश्रूभ्यामिति नोक्तम्, लाघवार्थम्। श्वश्रूशब्दोऽव्युत्पन्नं प्रातिपदिकं श्वशुरस्योकाराकारलोपश्चेत्यूङन्तत्वे प्रत्ययान्तत्वाद् ब्रह्मबन्धूरित्यादिवदेकदेशाभावाच्चाप्रातिपदिकत्वेऽपि श्वश्रेत्यस्मादेव निर्देशाल्लिङ्गात् सुपस्तद्धिताश्च भवन्ति। **श्वश्रूश्वशुराविति।** अभ्यर्हितत्वादेव पूर्वनिपातः, 'श्वश्रूः पूर्वजपत्नी च मातृतुल्या प्रकीर्तिता' अत्रापि दम्पत्योर्जनयितृत्वमात्रविवक्षायां लिङ्गाविवक्षायां समर्थनीयम्। अनारम्भपक्षेऽपि श्वश्रूश्वशुरावित्यभिधाने द्वन्द्वस्त्विष्यत एवेति, नार्थ एतेन॥ ७१॥

**त्यदादीनि सर्वैर्नित्यम्॥** सर्वशब्दस्यार्थमाह—**त्यदादिभिरन्यैश्चेति।** एतदेव प्रकटयति—**सर्वग्रहणमिति। त्यदादिभिरन्यैश्चेति।** यदिदं साकल्यमुक्तं तदर्थमित्यर्थः; अन्यथा प्रत्यासत्तेः 'तल्लक्षणश्चेदेव विशेषः' इत्यधिकाराद्वा त्यदादिभिरेव सहवचने स्यादिति भावः। **स च देवदत्तश्चेति।** ननु देवदत्तोऽपि सामान्यविवक्षायां तच्छब्देनैव निर्देष्टुं शक्यते, ततश्च सरूपाणामित्येव सिद्धम्। न चारब्धेऽपि सूत्रे वृत्तौ विशेषोऽन्तर्भावयितुं शक्यः, तावित्यस्य सरूपसाधारणत्वाद्विरूपणां च नानाविधत्वात्, सत्यम्; तद्देवदत्तावित्यादिद्वन्द्वनिवृत्त्यर्थं वचनम् अन्यथा 'तत्पुत्रस्तदीय' इत्यादिवृत्त्यन्तरवद् द्वन्द्वोऽपि स्यात्।

**भावबोधिनी**

'अन्यतरस्याम्' की अनुवृत्ति होती है। श्वश्रू के साथ कहा जाने पर श्वशुर शब्द विकल्प से शेष बचता है। उदा० -श्वशुरश्च श्वश्रूश्च—श्वशुरौ। अथवा श्वश्रूश्वशुरौ। [ दोनों से सास तथा ससुर प्रतीत होते हैं। ]॥ ७१॥

त्यदादि के साथ तथा दूसरों के साथ अर्थात् सभी के साथ कहे जाने पर त्यदादि शब्द रूप ही शेष बचते हैं। सर्व का ग्रहण साकल्य = सभी प्रकार के अर्थ के लिये है। नित्यग्रहण विकल्प की निवृत्ति के लिये है। स च देवदत्तश्च—तौ। यश्च देवदत्तश्च—यौ। [ तौ = वह और देवदत्त, यौ = जो और देवदत्त ]।

'त्यादादि के परस्पर प्रयोग में जो बादवाला है वह शेष बचता है, [ पहले वालों का लोप हो जाता है। ] उदा०—स च यश्च = यौ। यश्च कश्च—कौ। [ यहाँ बाद में यत् और किम् हैं। वे ही शेष बचते हैं। द्विवचन होता है। यौ = वह और जो; कौ = जो और कौन। ]॥ ७२॥

---

१. प्रस्तुतसूत्रे महाभाष्ये नैतद्वचनं दृश्यते। अभिप्रायप्रदर्शकमिदमिति नागेशभट्टः—"एतन्मूलकमेव पठ्यते—त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते।" ( उद्द्योतः १।२।७२ )

**१४८. ग्राम्यपशुसंघेष्वतरुणेषु स्त्री ॥ ७३ ॥ ( ९३९ )।**

**ग्राम्याणां पशूनां संघाः ग्राम्यपशुसंघाः, एतेषु सहविवक्षायां स्त्री शिष्यते । 'पुमान् स्त्रिया' इति पुंसः शेषे प्राप्ते स्त्रीशेषो विधीयते । अतरुणग्रहणं सामर्थ्यात्पशुविशेषणम् । गाव इमाः । अजा इमाः ।**

**ग्राम्यग्रहणं किम् ? रुरव इमे । पृषता इमे । पशुष्विति किम् ? ब्राह्मणाः, क्षत्रियाः । संघेष्विति किम् ? एतौ गावौ चरतः । अतरुणेष्विति किम् ? वत्सा इमे । बर्करा इमे ।**

**न्यासः**

**ग्राम्यपशुसंघेष्वतरुणेषु स्त्री ॥ ग्राम्याणामिति** । ग्रामे भवा ग्राम्याः । 'ग्रामाद् यखञौ' इति यः । ननु च संघस्य तरुणत्वं न संभवति, नापि तदवयवच्छेद्यं तरुणत्वम् । अतः 'अतरुणेषु' इत्युक्तं विशेषणमित्याह --**अतरुणग्रहणमित्यादि** । उच्यते चेदं विशेषणम्, न च संघस्य तत् सम्भवति, तत्र सामर्थ्यादन्येषां संघो विज्ञायते । **गाव इमा इति** । इमा इत्यनुप्रयोगः स्त्रीत्वाभिव्यक्तये । **एतौ गावाविति** । कथं पुनरिदं प्रत्युदाहरणम्, यावता द्वाभ्यामपि संघो भवत्येव ? नैष दोषः, यस्मात् संघग्रहणादिह बह्ववयवः संघो विवक्षितः—बहूनां यः संघ इति;

**पदमञ्जरी**

**यद्यत्परमिति** । त्यदादिपाठे शब्दपरविप्रतिषेधाश्रयणादिति भावः । **स च यश्च यावित्यादि । भाष्ये तु** 'पूर्वशेषः खल्वपि दृश्यते—स च यश्च तौ' इत्युक्तम् । इह चाहं च भवांश्चावामिति भवतीत्याहुः ।

**त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि**[1] । आद्यादित्वात्तसिः, त्यदादीनां शेषे सह विवक्षितो योऽर्थः पुमान्, यच्च नपुंसकं तद्वशेन लिङ्गवचनानि भवन्तीत्यर्थः । सचदेवदत्त च तौ, सा च देवदत्तश्च तौ, तच्च दवदत्ता च ते । पुंनपुंसकयोस्तु सहविवक्षायां परत्वान्नपुंसकवशेन व्यवस्था । तच्च देवदत्तश्च ते, इह स च कुक्कुटः सा च मयूरी—कुक्कुटमयूर्याविते, अर्धं पिप्पल्यास्तद् अर्धपिप्पली च सा अर्धपिप्पल्यौ ते इति परवल्लिङ्गमिति समासार्थस्य लिङ्गातिदेशात्तद्विशेषणस्यापि सर्वनाम्नस्तदेव लिङ्गं भवति ॥ ७२ ॥

**ग्राम्यपशुसंघेष्वतरुणेषु स्त्री** ॥ ग्रामे भवा ग्राम्याः । 'ग्रामाद्यखञौ' । **पुंसः शेषे प्राप्त इति** । 'पुमान् स्त्रिया' इत्यनेन । **सामर्थ्यादिति** । प्रधानस्य संघस्य तारुण्यातारुण्ये न सम्भवत इत्यस्मात्सामर्थ्याद् गुणभूतानामपि पशूनां विशेषणमित्यर्थः ।

**एतौ गावाविति** । यद्यपि द्वयोरपि संघो भवत्येव, तथापीह संघग्रहणसामर्थ्याद्बहूनां संघो गृह्यते, अन्यथा शेषस्यानेकविषयत्वाद् अनर्थकं न[2] स्यात् ।

**भावबोधिनी**

ग्राम्य = गाँव में होने वाले, पशुओं का संघ = समुदाय—ग्राम्यपशुसंघ । इन [ संघों ] में सहविवक्षा में स्त्रीवाचक शेष बचता है । 'पुमान् स्त्रिया' ( पा० सू० १।२।६७ ) से पुंल्लिङ्ग शेष होना प्राप्त रहने पर इससे स्त्री का शेषविधान किया जा रहा है । यहाँ सामर्थ्य [ अन्वययोग्यता ] के कारण 'अतरुण' का ग्रहण पशु का विशेषण है । [ ग्राम्य = गाँव में होने वाले, अतरुण = जो तरुण नहीं हैं, बूढ़े या बच्चे हैं, ऐसे पशुओं के संघ का कथन रहने पर स्त्री पशुवाचक ही शेष बच जाता है । ] उदा०—गाव इमाः । अजा इमाः [ ये गायें और बैल । ये बकरे और बकरियाँ । ]

ग्राम्य = गाँव में होने वाले—इसका ग्रहण क्यों है ? रुरव इमे । पृषता इमे । [ ये हिरन हैं । ये विशेष प्रकार के मृग हैं । ] पशुषु—यह किसलिये है ? ब्राह्मणाः, क्षत्रियाः [ यहाँ नहीं होता है । ] संघेषु = यह किसलिये है ? ये दो बैल या गाय और बैल चर रहे हैं । अतरुणेषु—यह किसलिये है ? वत्सा इमे । बर्करा इमे [ वत्स = बछड़ा, बर्कर = जवान बकरा । अतः नहीं होता है । ]

---

१. वृत्तौ नायमंशो लभ्यते । प्रस्तुतसूत्रे महाभाष्ये प्रथमं वार्त्तिकमिदं दृश्यते । तस्य भाष्यं कैयटीयप्रदीपश्च पदमञ्जरीकारेणात्र व्याख्यातः । एतेन वृत्तिपाठः त्रुटित इति प्रतिभाति ।

२. अर्थसमालोचनया 'न' इत्यस्य स्थाने 'च' इत्युचितं प्रतिभाति अथवा 'अनर्थकं तत्स्यात्' ।

**❀ अनेकशफेष्विति वक्तव्यम् ❀ । इह मा भूत्–अश्वा इमे ॥**

**❀ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ प्रथमाध्यायस्य द्वितीयः पादः ॥ ❀**

●

**न्यासः**

अन्यथा यदि द्व्यवयवस्य ग्रहणमिति मतं स्यात् संघग्रहणमनर्थकं स्यात्, व्यवच्छेद्याभावात्। **अनेकशफेष्वित्यादि**। अनेकानि शफानि = खुरा येषां तेष्वयमेकशेषो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—अन्यतरस्यांग्रहणमिहानुवर्त्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेनानेकशफेष्वेव भवति, नान्यत्रेति ॥ ७३ ॥

**❀ इति श्रीबोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्चिकायां प्रथमाध्यायस्य द्वितीयः पादः समाप्तः ॥ ❀**

●

**पदमञ्जरी**

**अनेकशफेष्विति**। शफाः = खुराः। उष्ट्राणां त्वारण्यत्वादेकशेषाभावः ॥ ७३ ॥

**❀ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां प्रथमस्याध्यायस्य द्वितीयः पादः समाप्तः ॥ ❀**

●

**भावबोधिनी**

'अनेक खुर वालों का ही एकशेष कहना चाहिये' यहाँ पर न हो–अश्वा इमे। [घोड़े का एक ही खुर होता है।] ॥७३॥

॥ इस प्रकार श्रीजयादित्य द्वारा विरचित काशिकावृत्ति में प्रथम अध्याय का द्वितीयपाद समाप्त हुआ ॥

*** ॥ इस प्रकार जयशङ्करलालत्रिपाठिविरचित 'भावबोधिनी' हिन्दी-व्याख्या में काशिकावृत्ति के प्रथम अध्याय का द्वितीय पाद समाप्त हुआ ॥ ***

●

## पाणिनीय-सूत्र-सूची

—:o:—

# शुद्धाशुद्धिपत्रम्

| पृष्ठाङ्काः | पंक्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| ७ | १८ | कूचिमश्वत्यादयः | कूचीमश्वीत्यादयः |
| ३७ | ७ | ईषस्पृष्टं | ईषत्स्पृष्टं |
| ४९ | ३ | इतिझकार | इति झकारेण |
| ५६ | ६ | संज्ञी, वृद्धिशब्दः संज्ञा | संज्ञा, वृद्धिशब्दः संज्ञी |
| ६२ | १६ | ०प्रक्षुद्रेष्वपिलोन्त्य ; अत्रा० | ०प्रक्षुद्रेष्वपि; अत्रा० |
| ६३ | ४ | ०गुणेषु विकाङ्गं | ०गुणेषु इकाङ्गं |
| ६४ | हि०—१४ | षष्ठ्यन्तं | षष्ठचन्तं |
| ६६ | हि०—७ | पथिमथ्यृक्षामात् | पथिमथ्यृभुक्षामात् |
| ७० | हि०—१० | √भज्ज् | √भञ्ज् |
| ६९ | १६ | स्थावत्त्वाभावादुधा० | स्थानिवत्त्वाभावादुपधा० |
| ८० | हि०—४ | मुखनासिकावचनोऽनुनासिक ॥ ८ ॥ | नहीं रहेगा |
| ८३ | २ | मुखादबहिर्वृत्ति० | मुखाद्बहिर्वृत्ति० |
| ८६ | २३ | तत्राकुहविवर्जनीयाः | तत्राकुहविसर्जनीयाः |
| ८६ | २६ | अ, अं, अ | अ, अ, अं |
| ८७ | २२ | रेफनिवृत्यर्थं | रेफनिवृत्त्यर्थं |
| ८९ | हि०—१ | होतृकारः ॥ ९ ॥ | होतॄकारः । |
| ८९ | हि०—२ | सूत्र ] । | सूत्र ] ॥ ९ ॥ |
| ९४ | १ | १२.१७२.१२ | १२.१७.१२ |
| ९४ | १८ | आदसो मात् | अदसो मात् |
| १०५ | २४ | शयानम्" | शयानम्'ऋ० ७.१०३.२ |
| १०६ | हि०—४ | वाप्यवः | वाप्यश्वः |
| ११० | १३ | व्यवच्छेद्य | व्यवच्छेद्यं |
| ११० | १८ | ०तदेवव्यावर्त्यमिति | ०तदेव व्यावर्त्यमिति |
| १११ | २४ | पा० सू० | पा० सू० ५.३.५७ |
| १११ | २५ | पा० सू० | पा० सू० ५.३.५५ |
| ११२ | १ | म० भा० १.८२ | म० भा० १.१.२४ |
| ११९ | १४ | पर्वपदस्य | पूर्वपदस्य |
| १२७ | ६ | ५.३६.३८ | ५.३६.५८ ) । १६२.१९ ॥ |
| १२९ | ३ | १.१.३६ वा० | १.१.३५ वा० ३ |
| १३६ | ७ | १.१८ | १.१.४१ |
| १३७ | २० | शीशस्यब्द | शीशब्दस्य |

| पृष्ठाङ्काः | पंक्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| १४४ | १९ | संज्ञिर्नं | संज्ञिनं |
| १४६ | हि०—६ | ८.३.३० | ८.२.३० |
| १४७ | १३ | ओकारोकार० | ओकारौकार० |
| १५२ | हि०—९ | अघोग | अघोष |
| १६४ | १६ | चौपसंगृह्य ते | चोपसंगृह्य ते |
| १८१ | २२ | तद्विषयतप्समीपक्ष | तद्विषयसप्तमीपक्ष |
| १८२ | ५ | शिषन्ति | शिंषन्ति |
| १८२ | २० | शिषन्तीति | शिंषन्तीति |
| १८२ | २२ | चिहीष् | चिहीर्ष् |
| १८३ | हि० — ७ | नहीं पाता | नहीं हो पाता |
| १८४ | ८ | ( १० ) चर्विधि | ( १० ) चर्विधि— |
| १८४ | ११ | शासिवसिघसीनां | शासिवसिघसीनां |
| १८९ | १४ | इषेरुषेश्च | इषेरुषेश्च |
| १९५ | १७ | परशव्ययोयञ्ञौ | परशव्ययोर्यञौ |
| १९७ | १४ | सर्वत्रैवा० | सर्वंत्रैवा० |
| १९७ | हि०—५ | वाडवसाने | वाऽवसाने |
| २०१ | १४ | षष्ठीनिर्दशे | षष्ठीनिर्देशे |
| २०२ | ११ | सुरा | सुरा— |
| २१० | २४ | उदश्वितोऽन्यरस्याम् | उदश्वितोऽन्यतरस्याम् |
| २११ | २८ | स्वार्थो स्व्, अर्थो हि | स्वार्थो [ स्वम्, अर्थो ] हि |
| २१३ | १३ | परेणणकारेण | परेण णकारेण |
| २१३ | २६ | शब्दौबाह्वादी | शब्दौ बाह्वादी |
| २१४ | हि०—७ | कुकवर्ग | कु = कवर्ग |
| २१७ | १ | सवर्णस्यग्राहको | सवर्णस्य ग्राहको |
| २१८ | हि०—८ | ऐस् सूत्र में | ऐस्-विधायक सूत्र में |
| २१८ | हि०—९ | विधायक रूप | रूप |
| २१९ | १७ | इक इति अचि | इक इति । अचि |
| २२४ | ९-१० | 'पौरुषेयं नाम' इत्यारभ्य 'इति उद्योतः ।' इत्यन्तः ग्रन्थः मुद्रणभ्रमात् न्यासे प्रक्षिप्तः । इयमस्माभिः कृता टिप्पणी, पादे प्रक्षेपणीयः । | संज्ञा वेदितव्या । तेष्वेव |
| २३३ | हि०—७ | अनीपर् | अनीयर् |
| २३५ | १५ | 'अह् न्विङोः' | अहन्विङः' |
| २४६ | ६ | यियिक्षते | यियक्षते |
| २४७ | | ती | ती |

| पृष्ठाङ्काः | पंक्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| २५२ | ७ | भार्याम, उपायस्त | भार्याम्, उपायंस्त |
| २७० | २० | सुम्नमेरु | सुम्नमेरु ( ऋ० २.३३.१ ) |
| २७१ | ६ | र्तत्तु कृतः | तद् कुतः |
| २७८ | ३० | ( जं० सू० ) | ( जै० सू० २.१.३६) |
| २८० | १९ | वषट्करोति' इति | वषट्करोति ( ऐ० ब्रा० ११.६, ७ पृ० ३९९ ) इति । |
| २८१ | हि०—६-८ | सुब्रह्मण्या आदि नीचे से तीन पंक्तियाँ | भावबोधिनी में दो पंक्ति के बाद होंगी । |
| २९३ | १५ | अनोजलं''''वराणागङ्गा | अनो = जलं''' वराणा = गङ्गा, |
| २९३ | हि०—२ | निष्क्रोन्तेन | निष्क्रान्तेन |
| २९७ | ,, २ | अध्यागछति | अध्यागच्छति |
| ३०३ | १६ | अदर्शनंलुक् | अदर्शनं=लुक् |
| ३०७ | २१ | ०शब्दानांमेएक० | ०शब्दानामेक० |
| ३१३ | १ | ०भामहे— | ०लभामहे— |
| ३२० | १४ | प्रोष्ठदानां | प्रोष्ठपदानां |
| ३२० | १९ | द्यामपंशन् | द्यामपिंशन् (ऋ० १०.६८.११) |
| ३२० | हि०—१ | वाचक के रहने पर | वाचक रहने पर |

—: ० :—